* सत्यं जयति नानृतम् *

काशी एवं अन्यान्य नगरों के सैकड़ों विशिष्ट
विद्वानों द्वारा समर्थित

# अर्हत्तिथिभास्कर

"शासने वर्धमानस्य चिन्नस्वामि 'पताकया' ।
ततन्तमो निराकर्तुमुदगादेष 'भास्करः' ॥"

[ जैनपर्वतिथियों के क्षय-वृद्धि-विषयक विवाद में पूना के प्रख्यात
पण्डित डाक्टर पी० एल्० वैद्य द्वारा दिये गये 'निर्णय' के
विरोध में म० म० प० चिन्नस्वामी शास्त्री से लिखित
'व्यवस्था' का तर्कपूर्ण, प्रामाणिक, अकाट्य
खण्डन करके प्राचीन-परम्परासम्मत
जैनशास्त्रीय सत्य सिद्धान्त
का प्रकाशक ]

सम्पादक—

प्र० सं० ५०० } विद्वत्समिति, काशी. { सं० २००६

* सत्यं जयति नानृतम् *

काशी के सुप्रतिष्ठित विद्वानों की समिति द्वारा सम्पादित

तथा

काशी एवं अन्यान्य नगरों के सैकड़ों महान् विद्वानों द्वारा समर्थित

# अर्हत्तिथिभास्कर

"शासने वर्धमानस्य चिन्नस्वामि 'पताकया' ।
ततन्तमो निराकर्तुमुदगादेष 'भास्करः' ॥"

इस पुस्तक में म० म० प० श्रीचिन्नस्वामी शास्त्री से रचित उस "शासनजयपताका" नामक व्यवस्था का खण्डन अनेक अकाट्य शास्त्रीय प्रमाणों और तर्कों के आधार पर बड़े विस्तार और विवेचन के साथ किया गया है, जिसे शास्त्री जी ने जैनपर्वतिथियों के क्षय-वृद्धि-विषयक विवाद में पूना के प्रसिद्ध विद्वान डाक्टर पी० एल्० वैद्य महोदय-द्वारा मध्यस्थ के अधिकार से दिये गये 'निर्णय' के विरोध में लिखा था।

प० चिन्नस्वामी जी ने प्रस्तुत विषय की पूरी जानकारी कराये बिना ही अपनी व्यवस्था पर जिन विद्वानों के हस्ताक्षर प्राप्त किये थे उनमें से जिन जिन सज्जनों के समक्ष यह पुस्तक उपस्थित की जा सकी उन सभी लोगों ने इसमें प्रतिपादित तथ्यों से प्रभावित होकर अपने पूर्वमत को बदल कर इसके पक्ष में सम्मतियां दी हैं।

संयोजक—
राजनारायण शुक्ल.

शासनजयपताका-परीक्षणपूर्वकपर्वतिथिक्षयवृद्धिविषयकजैनशास्त्रीय-सिद्धान्तनिरूपणाय संयोजितायाः **विद्वत्समितेः** सदस्या-

**"अर्हत्तिथिभास्कर"** सम्पादकाः—

१. **श्रीराजनारायणशर्मपाण्डेयः** शास्त्राचार्यः शास्त्रार्थमहारथः ( प्रोफेसर, काशीहिन्दूविश्वविद्यालय )

२. **श्रीरामव्यासपाण्डेयः** ज्योतिषाचार्यः, ज्योतिषतीर्थः, ज्योतिष-मार्तण्डः ( अध्यक्ष-ज्योतिषविभाग, काशीहिन्दूविश्वविद्यालय, प्रधान-सम्पादक-विश्वपञ्चाङ्ग, सदस्य-कोर्ट, कौन्सिल, सिनेट, फेकल्टी, बनारस-हिन्दूयूनिवर्सिटी, मन्त्री-अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलन, सभापति-पञ्चाङ्गशोधनसमिति, प्रधानमन्त्री-सरयूपारीणपण्डितपरिषद्, निरीक्षक—काशीविद्वत्परिषद्, अध्यक्ष—बनारस-ज़िला-संस्कृताध्यापकसङ्घ ।

३. **श्रीसत्यनारायणशास्त्री पाण्डेयः** ( प्रोफेसर, काशीहिन्दू-विश्वविद्यालय, संरक्षक-काशीविद्वत्परिषद्, सदस्य-कोर्ट, बनारसहिन्दूयूनि-वर्सिटी, सभापति-सरयूपारीणपण्डितपरिषद्, उपसभापति-अखिलभारतवर्षीय संस्कृतसाहित्यसम्मेलन ।

४. **श्रीविश्वनाथशास्त्री** वेदधर्मशास्त्राचार्यः ( प्रोफेसर—काशीहिन्दू-विश्वविद्यालय, सदस्य-कोर्ट, फेकल्टी, बनारसहिन्दूयूनिवर्सिटी, मन्त्री—अखिलभारतवर्षीय सनातनधर्ममहासभा-विद्वत्परिषद् ।

५. **श्रीवसिष्ठदत्तमिश्रः** धर्मशास्त्राचार्यः ( प्रोफेसर-बनारसहिन्दूयूनिवर्सिटी )

६. **श्रीरामाज्ञापाण्डेयः** व्याकरणाचार्यः विहारप्रान्तीयशिक्षा-विभागात् प्राप्तावकाशः ( R. P. E. S. ) अध्यक्ष—रिसर्चविभाग, गवर्नमेण्ट संस्कृत कालेज़ बनारस ।

७. **श्रीपद्मप्रसादभट्टराईः** न्यायशास्त्राचार्यः न्यायशास्त्रप्रधाना-ध्यापकः ( गोयनका-संस्कृतमहाविद्यालय, काशी ) सदस्य—संयुक्तप्रान्तीय इण्टरमीडिएट बोर्ड ।

८. सुगृहीतनामधेयविद्वद्वरश्रीहृषीकेशोपाध्यायात्मजः

**श्रीनागेशउपाध्यायः** एम्० ए० आनरेरी मजिस्ट्रेट, सदस्य-कोर्ट, बनारसहिन्दूयूनिवर्सिटी, प्रधानमन्त्री—अखिलभारतीयरामायणमहा-सम्मेलन, प्रकाशक—"संस्कृतरत्नाकर" सम्पादक—सुप्रसिद्ध "श्रीकाशी-विश्वनाथपञ्चाङ्ग" ।

९. **श्रीबलदेव उपाध्यायः** एम्० ए० साहित्याचार्यः (प्रोफेसर-बनारसहिन्दूयूनिवर्सिटी ), सुप्रतिष्ठित मङ्गलाप्रसाद पुरस्कार विजेता "भारतीयदर्शन", "बौद्धदर्शन", "भारतीयसाहित्यशास्त्र", "शङ्कराचार्य" आदि अनेक सुप्रसिद्ध ग्रन्थों के प्रणेता ।

१०. **श्रीवीरमणिप्रसाद उपाध्यायः** एम्० ए० बी० एल, डी० लिट्, साहित्याचार्यः ( प्रोफेसर—बनारसहिन्दूयूनिवर्सिटी )

११. **श्रीकान्तानाथशास्त्री तैलङ्गः** एम्० ए० साहित्यशास्त्री ( प्रोफेसर—बनारसहिन्दूयूनिवर्सिटी )

१२. **श्रीनिरीक्षणपतिमिश्रः** शाब्दिकशिरोमणिः साहित्यव्याकरणाचार्यः ( प्रोफेसर—काशीहिन्दूविश्वविद्यालय, प्रधानमन्त्री—विहारप्रान्तीय धर्मसङ्घ ।

१३. श्रीकेशवद्विवेदी न्यायाचार्यः ( प्रोफेसर-गवर्नमेण्टसंस्कृतकालेज बनारस )

१४. श्रीबदरीनाथशुक्लः न्यायवेदान्तशास्त्राचार्यः तार्किकशिरोमणिः ( अध्यापक—काशीहिन्दूविश्वविद्यालय, प्रधानमन्त्री—राष्ट्रियसंस्कृतपरिषद्, काशी ।

१५. श्रीरामानुज ओझाः न्यायव्याकरणाचार्यः वेदान्तसाहित्यसागरः ( अध्यापक, बिरलासंस्कृतकालेज़-लालघाट, बनारस ) उपाध्यक्ष—संयुक्तप्रान्तीय संस्कृताध्यापकसङ्घ ।

१६. श्रीरामगोविन्दशुक्लः साहित्यव्याकरणाचार्यः न्यायमीमांसाशास्त्री, साहित्यरत्नम् ( अध्यापक-श्रीसंन्यासीसंस्कृतकालेज, काशी । मन्त्री—संयुक्तप्रान्तीय संस्कृताध्यापकसङ्घ, सम्पादक—"सन्देश" ।

१७. श्रीराजनारायणशुक्लः न्यायाचार्यः व्याख्यानवाचस्पतिः अनेकशास्त्राध्यापकः ( अध्यक्ष—शास्त्रार्थमहाविद्यालय, मीरघाट, काशी, प्रधानमन्त्री—श्रीकाशीविद्वत्परिषद्, संयोजक—प्रकृतविद्वत्समिति ।

———

( ९ )

श्रीविश्वनाथो विजयते

# आद्यमावेदनम्



पञ्चोत्तरसहस्रद्वयसम्मिते वैक्रमे वर्षे प्रावृषि ऋतौ गुर्जरदेशस्य कतिपयजैनमित्रैः काशीस्थपण्डितश्रीचिन्नस्वामिशास्त्रितो लब्धसम्भवां तदीयविनयादिवशंवदैर्बहुलैर्विद्वत्कुलैरुपलालितां "शासनजयपताकाम्" मह्यं समर्प्य तदीयसर्वाङ्गपरीक्षणपुरस्सरं तद्विषये सम्मतिप्रदानाय सम्प्रार्थितोऽभवम्, मन्ये, तस्यां काशिककोविदवर्गस्य वास्तविक्या धारणाया वाराणसेयतया विशेषाभिज्ञं विज्ञायैव ते मामेतत्कार्याय न्ययूयुजन्, मत्तः प्रमितावदाततामेव च तान्निजसमाजसमादृताम-चिकीर्षिषुः ।

अहमपि महता कौतुकेन प्रथमं स्वयमेव ताम् पवित्रेणान्तःकरणेन पर्यैक्षिषि। परीक्षयाऽनया च तस्या विषये समुद्भूतं स्वकीयं भावं स्वात्मनः पाणिस्पर्शपूर्वकैराशीर्वादैस्तदीयसौभाग्याभिवृद्धिकामेभ्यः काश्याः कतिपयपण्डितेभ्यो व्यजिज्ञपम् । तेभ्यश्च सत्यवाग्भ्यः पार्श्ववासिजातेति कृत्वा किमपि न निभाल्यैव तैर्हस्ताक्षरप्रदानेन सा प्रतिष्ठापितेति परिज्ञाय तदीयतत्त्वनिर्णयेनात्मनस्तितर्पयिषया बहु विश्रुतानां बहुश्रुतानां निसर्गनिष्पक्षनिश्चयानां पुरः प्रकाशयिष्यमाणसंज्ञानामनेकशास्त्रान्तरङ्गविज्ञानां वाराणसेयविद्वत्प्रकाण्डानामेकां समितिं संयोज्य तस्या एव परीक्षणभारं समार्पिपम् ।

सा च समितिस्तदनुकूलामखिलां सामग्रीं सङ्कलय्य तया सघृणेनाक्ष्णा निराकृतं पुण्यपत्तनस्थविद्वद्वर्यश्रीपरशुरामशर्मसम्भवं निर्णयपत्रं

तन्निन्दकं तस्याः रहस्यमित्रं पं० श्रीतुलाकृष्णझाशर्मजातम् आगमानुसारिमतव्यवस्थापनम् एतन्निखिलोपजीव्यं जैनाचार्ययोः श्रीसागरानन्दसूरिश्रीरामचन्द्रसूरिमहाशययोस्तदुभयवाक्यारूढं मतभेदञ्च सुचिरं समीक्ष्य जैनागमसदाचारानुसारेण तस्याः जैनोपग्रहणयोग्यतानिश्चये प्रचुरं परिश्रम्य च तां जैनजनग्रहणानर्हामेव वक्ष्यमाणप्रकारेण निर्धारयति निरूपयति च पर्वतिथीनां क्षयवृद्धिविषये शास्त्रीयं सिद्धान्तम् निरस्यति च निर्युक्तिकां कदाचारप्रवर्तिकामसत्तान्त्रमूलिकां परकथाम् ।

वाराणस्याः विशिष्टविद्वद्वर्गेण वरिष्ठतया गण्यमानान् व्याकरणस्य, साहित्यस्य, न्यायमीमांसादिसमग्रदर्शनशास्त्रस्य, ज्यौतिषस्य धर्मशास्त्रस्य, पूज्यतमस्य वेदराशेः, इतिहासस्य, प्राकृतादिभाषाभाण्डारस्य च प्राच्यप्रतीच्यपद्धतिभ्यां सर्वाङ्गीणं पाण्डित्यं दधानान् काशीकलशायमानान् पण्डितप्रवरान् सदस्यतया संगृह्णन्ती समितिरियञ्चैतद् विचारयतिः—

यदा जैनपर्वतिथीनां क्षयवृद्धिविषयके प्रकृते विवादे निर्णयार्पणाय उभयपक्षाभ्यां राजनगरस्य प्रधानतमश्रेष्ठिनो भारतस्य राज्यसंघेन जनवर्गेण च सम्मानितस्य स्वपरराष्ट्रप्रतिष्ठागरिष्ठस्य श्रावकधुर्यश्रीकस्तूरभाईलालभाईमहाशयस्य द्वारेण कश्चन मध्यस्थो निरवाचि तदा तदीयनिर्णयस्य द्वाभ्यामेव पक्षाभ्यां माननमुचितमावश्यकञ्चासीत्। परं यदि परेण पक्षेण तन्निर्णयेऽविश्वासकारणं किञ्चिदासादि तदा पुनर्निर्णयगवेषिणा तेन पक्षान्तरसहयोगेनैव कस्यचित् प्रतिष्ठिततरपण्डितान्तरस्य समित्यात्मनः कतिपयविद्वत्समवायस्य वा निर्वाचनं न्याय्यं धर्म्यञ्चासीत् परं पराजितपक्षेण तथा नाकारि किन्तु गृहीतमताविष्टतया पक्षान्तरापेक्षामनवेक्ष्यैव स्वात्मनो मनोनीतः कथितो जनो न्ययोजि।

स च जनो निजनियोजकाभिप्रायानुसारिणीं "शासनजय-पताकाम्" विनिर्माय स्वकीयविनयपरिचयप्रार्थनादिबलेन बहूनां सम्प्रदायान्तरोदन्तसंवेदनरसरहितानां वाराणसेयानामन्येषाञ्च विदुषां हस्ताक्षराणि संगृह्य च स्वात्मानमनृणमकार्षीत् । इत्यतः समितिरियं पराजितपक्षस्य कार्यमिदन्नितान्तन्निन्दनीयं घोषयति न पारयति चेदं निश्चेतुं यत् पक्षद्वयेन निर्वाचितस्य विदुषो निर्णयं सकलजैनजनतायाः विश्वासभाजनं कथं कर्तुं निरचैषीत् ? अतो निजनिर्णये कृतनिर्भरा समितिः महता सौहार्देन जैनजनेभ्यस्तदागमानां तथ्यं पथ्यं च सन्देशमर्पयन्ती प्रस्तुते विषयेऽन्यथावादिवर्गं प्रत्यक्षशास्त्रार्थकथापथेऽवतरीतुं सोत्साहमाह्वयति ।

अहन्तु सुदृढं विश्वसिमि यत् समितेर्निर्देक्ष्यमाणं निर्णयं निर्दोषतया, परिपूर्णतया, जैनागमप्रतिष्ठापरित्राणप्रवणतया, मध्ये विच्छिन्नस्य जैनशास्त्रसम्मतप्राचीनसदाचारस्य पुनः प्रतिष्ठापकतया च विचाराचारसम्पदवदातस्सकलश्रीजैनसङ्घो वैमत्यत्यागेन सम्भावयिष्यति, यश्च तदन्तर्गतो वर्गो हितमपीदं न श्रोष्यति स समितेर्वादाहवनिमन्त्रणमङ्गीकुर्वन्नात्मनः प्रतिभटान्नूनं न चिरञ्चाभिमुखीकरिष्यतीति ।

शास्त्रार्थमहाविद्यालयः
मीरघाट, काशी
आश्विनी २००६ वै०



समितिसंयोजयितुः
श्रीराजनारायणशुक्लस्य

---

सूचना—षष्ठपङ्क्तौ "निर्णयम्" इत्यनन्तरम्—पक्षैकपातिनं प्रथयन् पराजितः पक्षः स्वेन केवलेन वृतस्य पुंसो निर्णयमिति योजनीयम् ।



# साम्बशिवो जयतु

येषां सुकृतिमान्यानां श्रावकनायकानां परमोदारसहयोगेन ग्रन्थोऽयं-न्निर्माणमुद्रणे प्रापत् तेषां सत्कर्मकौशलं प्रशंसन्ती विद्वत्समितिरियं धन्याशीर्वादप्रदानेन तानभिवर्धयति ।

"धर्मो रक्षति रक्षितः"

इति शुभं सन्दिशतः
संयोजकस्य
समितेः



श्रीः

# अर्हत्तिथिभास्करः

शासनजयपताकायाः द्वितीये पृष्ठे तज्जनकेन "क्षये पूर्वा तिथिः-कार्या वृद्धौ कार्या तथोत्तरा" इति वचनस्य हेमाद्रिद्वारेण शिवरहस्य-सौरपुराणवचनत्वं वर्णयित्वा प्रथमे चरणे चानुपूर्वीभेदं दर्शयित्वा तस्य मध्यस्थकथितमाचार्योमास्वातिसंग्रथितत्वं निरस्तम् । परमेष निरासो न शोभनो न च सम्मान्यो जैनसंघस्य, तद्वचसो हेमाद्रावुद्धृताद् वचसो विभिन्नानुपूर्वीकत्वाद् विभिन्नार्थकत्वाज् जैनजनेषु वाचकमुख्यो-मास्वातिसंग्रथितत्वेन प्रसिद्धत्वाच्च । न चानुपूर्वीभेदस्य तद्वचोविग्रहा-व्यापितया हेमाद्रिनिर्दिष्टतादृशवचोविभिन्नकर्तृकत्वं तस्य वचसो न सम्भवतीति वाच्यम् ? अनेककर्तृकेषूपनिषद्गीतापुराणादिषु देशविशेषे भिन्नानुपूर्वीभाजां बहुलवचसामनेककर्तृकत्वस्य सर्वसम्मतत्वात् । विभिन्नार्थकत्वमपि तयोरनुपपन्नतया न शङ्कनीयम् , विवदमानाभ्यां द्वाभ्यामप्याचार्याभ्यां वर्ण्यमानस्य तद्वचनार्थविशेषस्य वैदिकसंप्रदाये तद्वचनार्थताया अनभ्युपगमात् । जैनप्रसिद्ध्यनुरोधेनापि तादृशोक्तेरौ-चित्यसम्भवेन प्रस्तुते प्रधाने विषये तत्कर्तृपरीक्षणस्यानङ्गत्वेन जैनेतर-कर्तृकत्वव्यवस्थापनस्य प्रतिकूलत्वेन चाप्येष पताकाकृतः प्रयासः परिहसनीय एव ।

पताकायास्तृतीये पृष्ठे तत्पित्रा 'क्षये पूर्वा तिथिः कार्या" इति वचनस्य सप्तम्यादिरूपायां पूर्वतिथौ अष्टम्यादिरूपक्षीणतिथिविधायकत्वं मध्यस्थाभिप्रेतं प्रथयित्वा "न ह्येकस्यां तिथावपरा तिथिर्विधातुं शक्यते । न ह्येकस्मिन् धर्मिणि धर्म्यन्तरविधानं सम्भवति । न वा सप्तमी विधिशतेनाप्यष्टमीकर्तुं शक्यते" इति वाक्येन निराचिकीर्षितम् ।

पुनस्तुरीये पृष्ठे तिथिशब्दार्थं निरूप्य विशिष्टे प्रवर्तमानस्य विधेः विशेष्यस्य प्रकारान्तरेण प्राप्तत्वे विशेषणपर्यवसायितां च प्रकारस्य

प्रोक्तवचसः सप्तम्यादौ सप्तमीत्वादिनिवृत्तिपूर्वकाष्टमीत्वादिविधायकत्व-स्यापि मध्यस्थाभिकाङ्क्षितस्यापाकरणं पताकायाः पञ्चमे पृष्ठे "एवञ्च कलागता या सप्तमी संख्या सा सप्तमी संख्या न भवति किन्तु अष्टमी सेति विधिरवबोधयतीत्यभ्युपगन्तव्यम्, कथन्तत् सङ्गच्छताम् ? प्रत्यक्षतो ज्यौतिषशास्त्रतो वाऽवगम्यमानस्य वस्तुनः केवलं विधिना प्रलपितुमन्य-थयितुं वाऽशक्यत्वात्" इति वाक्येन चिकीर्षितम्।

तत्र प्रथमे स्थले सप्तम्यादावष्टम्यादिविधानस्याशक्यत्ववर्णनमात्रं कृतं न तु कश्चन हेतुरुपन्यस्तः। केवलं कपोलवादनेनैवात्मनो मनो-रथो बिभरिषितः। अतो नात्र किञ्चिदधिकं वक्तुमवसरः, किन्तु केवल-मेतदेव निवेदयामो यन्नैव मध्यस्थस्याशयो विद्यते यद् विधिः सप्तमीम-ष्टमीकरोति तथा कर्तुं वा पुमांसमादिशति, किन्तु प्रकारान्तरेणाप्राप्ता-मौदयिकापर्वतिथीनां क्षीणपर्वतिथिरूपतां स्याद्वादमार्गेण आराधना-निमित्तापेक्षया निर्बाधं सम्भाव्यमानामवबोधयति, बोधयंश्चैवं प्रभवति पर्वतिथीनां क्षयदिनेऽपर्वतिथीनामपि पर्वतिथ्यात्मनाऽऽराध-नाङ्गताव्यवस्थापन इति।

द्वितीये स्थले च चन्द्रकलात्मिकायां तिथौ तद्गतायाः सप्तम्याः संख्याया निवृत्तेरष्टम्याः संख्यायाश्च वृत्तेर्बोधकत्वं तद्वचसो न सम्भवती-त्यत्र प्रत्यक्षज्यौतिषान्यतरेण वेद्यमानस्यापलापनेऽन्यतासम्पादने वा विध्य-सामर्थ्यं हेतुतयोपन्यस्तम्। तत्सत्यमपि प्रकृतेऽनावसरिकम्, यतो हि न विधेः सप्तम्यास्तिथेः सर्वथैव सप्तमीत्वशून्यत्वमष्टमीत्वसम्पन्नत्वञ्च व्यु-त्पाद्यतयाऽभिसंहितं किन्तु जैनशास्त्रीयाराधनानिमित्तापेक्षयैव, ज्यौतिष-शास्त्रविरोधस्तु तदा स्याद् यदि ज्यौतिषं सप्तम्याः जैनसम्मतसापेक्षा-ष्टमीत्वाभावमावेदयेत्, अथवा "क्षये पूर्वा तिथिः कार्या" इति विधिः ज्यौतिषप्रतिपादितं सप्तमीत्वमष्टमीत्वरहितत्वञ्च सर्वथा प्रत्यवस्थापयेत्, परमेतस्योभयस्यैवाभावान्न प्रकृते तस्य सन्देहगन्धोऽपीति।

किञ्च कथितो हेतुः पताकाकृत्कर्तृकोपन्यासकर्मतान्नैवार्हति ज्यौतिषो-

अजीविटिप्पणप्रवेदितस्याष्टमीक्षयदिने सप्तम्या औदयिकीत्वस्याष्टम्या-श्चानौदयिकोत्वस्य "क्षये पूर्वा तिथिः कार्या" इति विधिबलेन पताकाया अष्टमे पृष्ठे तेन स्वयमेव वैपरीत्येन वर्णयिष्यमाणत्वात्।

पताकान्तःपतितायाः "क्षये पूर्वा तिथिः कार्या" इति वचनव्याख्यायाः परीक्षणम्—

पताकायाः सप्तमे पृष्ठे "तथापि जैनसम्प्रदाय" इत्यारभ्य "वचनमिदं प्रवर्तते" इत्यन्तेन वाक्यजातेनोक्तवचसोऽवतारणां प्रदर्श्य तदीयं व्याख्यानद्वयं पताकाकृता स्वेष्टतया निर्दिष्टम्। तत्र प्रथमन्तावदेतत्:— "अत्र तिथिरित्युद्देश्यसमर्पकम्, पूर्वेति पदं विधेयसमर्पकम्, तिथिरिति सामान्यश्च तमपि तिथिपदं प्रकरणात् पर्वतिथिपरम्, तिथिसामान्यरूपा-यामपर्वतिथौ अवश्यकर्तव्यस्य कस्यचिदनिरूपणात् अवश्यकर्तव्यविशिष्टा पर्वतिथिरेवात्रोद्देश्यतां भजते, अतस्तस्याः क्षयासम्भवात् तत्पूर्वस्या अपर्वतिथेरेव क्षयः फलति। पर्वतिथेस्तु अनेन वचनेनौदयिकीत्वं विधीयते। ······················अतश्चायमर्थः सिद्धो भवति, पर्वतिथेः पञ्चाङ्गे क्षये दृष्टे सति तत्प्राक्तनापर्वतिथिनिष्ठमौदयिकीत्वं पर्वतिथौ भावयेदिति"।

अत्र वयमिदमाघोषयामो यत् पताकाकृता निर्दिष्टा उक्तवचसो ऽवतारणा नितरामसङ्गता, यतो हि तेन पूर्वं "जैनसम्प्रदाये औद-यिकी तिथिरेव सर्वकार्योपयोगिनी" इत्युक्तम्। तेन चौदयिकीनां पर्वतिथीनामेवाराधनायास्तदङ्गतायाः वा जैनशास्त्रादिष्टत्वं प्रतिभाति। एवञ्च याः पर्वतिथयः पञ्चाङ्गेनानौदयिक्यो निर्दिश्यन्ते तासामाराधनाया अकरणेऽपि शास्त्रादेशभङ्गभयाभावात् "कथङ्कारं तत्राराधना क्रियताम्" इत्याकाङ्क्षायाः पताकाकृद्दर्शिताया अनुत्थानपराहतत्वेन तत्प्रशमकतया तद्वचसः प्रवृत्तिरयौक्तिकी।

अथ यदीदमुच्येत यत् समर्थनीयतया तत्स्वीकृते पक्षे पर्वतिथीनां वास्तविकस्य क्षयस्याभावात् सर्वासां पर्वतिथीनामौदयिकीत्वेन तासां

सर्वासामेवाराधनीयता शास्त्रतः प्राप्नोति, परं पञ्चाङ्गेन तासु कस्याश्चित् क्षयनिर्देशे तस्याः प्रकारान्तरेणौदयिकीत्वस्य ज्ञातुमशक्यतया "कथं तदाराधना कार्या येन शास्त्रीयः सर्वपर्वतिथ्यादेशः पालितः स्यात्" इत्याकाङ्क्षायाः जन्म निष्प्रत्यूहमेवेति । तदप्यसङ्गतम् ।
"क्षये पूर्वा तिथिः कार्या" इत्येतद्वचोऽव्यतिरिक्तस्य पर्वतिथिक्षयाभाववेदिनोऽभावेन तत्प्रवृत्तेः पूर्वं सर्वासां पर्वतिथीनामौदयिकीत्वं भवत्येवेत्यस्य ज्ञातुमशक्यतया औदयिकीनामेव तिथीनां सर्वकार्योपयोगित्वमिति जैनसिद्धान्ते जाग्रति सर्वपर्वतिथीनामाराधनादेशे शास्त्रतात्पर्यज्ञानोदयासम्भवेन तादृश्या आकाङ्क्षायाः प्रादुर्भूतेः प्रजापतिसहस्रेणापि कर्तुमशक्यत्वात् ।
व्याख्यानविषये चैतद्भ्रमः—

अत्र तिथिपदस्योद्देश्यपरत्वम् पताकाकृन ईप्सितं न युक्तम्? "यच्छब्दयोगः प्राथम्यम्" इत्यभियुक्तवचोऽनुसारेणोद्देश्यपरपदस्य प्राथमिकप्रयोगनियमस्य परित्याज्यतायाः अगतिं विनाऽनौचित्यात् ।

"तिथिरिति सामान्यश्रुतमपि पदं प्रकरणात् पर्वतिथिपरम्" इतीदमपि पताकाकृद्वचनमयुक्तमेव, सामान्यवाचिनस्तिथिपदस्य पर्वतिथिमात्रे संकोचकाभावात्, विशेषतोऽनिर्देशेन प्रकरणस्य प्रकृतेऽस्तित्वशून्यतायाः दुर्बलतायाश्चाग्रे विस्तरेण वर्णयिष्यमाणत्वाच्च ।

यच्चाष्टमे पृष्ठे पताकायाः "पूर्वानिष्ठं यदौदयिकीत्वं तदेवानेन विधीयते" इति, तदत्यन्तमसत्? पूर्वानिष्ठस्य तस्य पूर्वस्यामेव सम्भवेनान्यस्यां तद्विधानासम्भवात् । पञ्चाङ्गेन पूर्वानिष्ठतया निर्दिष्टं वस्तुतस्तूत्तरस्यामेव विद्यमानं यदौदयिकीत्वं तद्विधीयत इत्यर्थकतया तस्य वाक्यस्य समर्थनमपि न शक्यसम्भवम्? उत्तरानिष्ठस्य तत्र विधिं विनापि सिद्धतया विधानानावश्यकत्वात् । न तत् स्वरूपतो विधित्सितं किन्तु प्रत्ययतः, स च न प्रकारान्तरतः प्राप्तः, प्रत्युत पञ्चाङ्गेन प्रतिहत इति तस्यैव बलिना विधिना प्रसूतिरीप्सितेत्येतदपि तथैव, स्वसामग्रीमात्रतन्त्रस्य

तस्य पुरुषप्रयत्नासाध्यत्वात्, न च नेदं वचस्तत्तादीयं ज्ञानं वा विधत्ते किन्तु तदवबोधन्तनुते नातः कथितो दोष इति वाच्यम् ? तथा सति तस्य वचसोऽपूर्वबोधकशब्दव्यपदेशविषयत्वसम्भवेऽपि अपूर्वविधिशब्द-व्यपदेशपात्रताप्रतारितत्वप्रसक्तेः। न चोपचारादौदयिकीत्वबोधनद्वारा क्षयदिने क्षीणतिथेराराधनाविधानपर्यवसानाद्वा तत्र तादृशो व्यपदेशस्स-मर्थनार्ह इति वाच्यम् ? तथा सति मध्यस्थमतखण्डनस्यानौचित्यापत्तेः, तन्मतस्यापि "टिप्पणे प्रत्याख्यानवेलायां विनिर्दिष्टा सप्तम्यादिर्न केवलं सप्तम्यादिरूपैव, अथवाऽऽराधनादिविधावपि तद्रूपैव, किन्तु आराधनाद्य-नुरोधेन क्षीणाष्टम्यादिरूपापीत्येतदर्थस्य मानान्तरानधिगतस्यावबोधक-तया तादृशबोधोपधानद्वारा क्षयदिने क्षीणतिथ्याराधनायास्साधनान्त-रासिद्धायाः प्रतिष्ठापने पर्यवसायितया वा तद्वचोऽपूर्वविधिरूपम्" इत्येवंरूपतया वर्णनसम्भवात्।

पदार्थाशुद्धयो भाषाऽशुद्धयश्चात्र प्रसङ्गेऽनेकाः, यासु कियत्य एवम्:—

अष्टमे पृष्ठे "तिथिसामान्यरूपायामपर्वतिथौ" अत्र पूर्वपदमव्यावर्तकं तिथिभेदभूताया अपर्वतिथेरपर्वतिथिशब्दादेवातिथिव्यावृत्तायाः लाभात्।

"तिथेः क्षयो नाम नात्यन्ताभावो ध्वंसो वा, तस्यास्तद्दिने सत्त्वात्" इत्यत्ययुक्तम् ? तद्दिने तत्तिथिसत्तायास्तदत्यन्ताभावस्य तदीयध्वंसस्य वा तद्दिननिष्ठताया अप्रतिकूलत्वात्, तत्तिथिमत्यपि दिने दण्डप्रहरादि-कालभेदेन तयोः प्रवेशस्य निष्कण्टकत्वात्।

"तस्याः सूर्योदयानन्तरोत्पन्नत्वेन औदयिकीत्वाभावः" इत्यप्यशुद्धम्, औदयिकीत्वाभावस्योदयकालसम्बन्धाभावरूपस्य सूर्योदयानन्तरोत्पन्न-त्वाहेतुकत्वात्, किंहेतुकस्तदा स इति चेत्, सम्बन्धस्य सम्बन्धिद्वया-धीनतया द्वयोरेकतरस्याप्यभावे तत्सम्भवायोगेन सूर्योदयकाले क्षीणत्वे-नाभिमतायास्तिथेरभावात्तदायत्त एव सः, तत्तिथ्यभावस्तदानीं कुतो हेतोरितिचेत् सूर्योदयकाले तत्पूर्वकाले वा तत्तिथिप्रवेशप्रभवाभावात्।

"उदयसम्बन्धाभावाद् यदौदयिकीत्वं गतम्" इत्यपि सदोषम्,

यतो हि औदयिकीत्वस्य गतत्वमौदयिकीत्वाभावरूपम्, तच्चोदयसम्बन्धाभावरूपम्, प्रयोज्यप्रयोजकभावश्च भेदनियत इति।

"अत्र हि न पूर्वात्वं विधेयतावच्छेदकम्, तस्य पूर्वमेव सत्त्वात्, न वाऽष्टमीत्वम्, तस्य विधातुमशक्यत्वस्य पूर्वमेव निरूपितत्वात्"।

अनेन वाक्येन पूर्वात्वस्य विधेयतानवच्छेदकत्वे पूर्वामात्रनिष्ठत्वस्य यद्धेतुत्वमुक्तम्, तन्न सम्यक्, तस्य तदीयविधेयतावच्छेदकत्व एवानुकूलत्वात्। एवमष्टमीत्वस्य विधेयतानवच्छेदकत्वे तद्विधानाशक्यत्वनिष्ठपूर्वनिरूपितत्वस्य यद् हेतुत्वं कीर्तितं तदपि दुष्टम्, तादृशनिरूपितत्वस्य तत्राहेतुत्वात्, पूर्वनिरूपिततद्विधानाशक्यत्वस्य हेतुतायां तात्पर्यमिति तु नोचितम्, निरूपितत्वशब्दोत्तरपञ्चम्यर्थेन तदप्रकृत्यर्थस्य तादृशाशक्यत्वस्यान्वयासम्भवेन तद्वाक्यतस्तल्लाभासम्भवात्, कथञ्चिदेतत्परीहारोपायचिन्तनेऽपि तद्विधानाशक्यत्वस्य तदविधेयतायामेव हेतुत्वौचित्येन तस्य विधेयतानवच्छेदकत्वेऽनिमित्तत्वात्, किञ्च पूर्वापदस्य विधेयसमर्पकत्वस्वीकारे पूर्वस्यां विधेयतायाः प्राप्तत्वेन पूर्वात्वे विधेयतावच्छेदकतायाः प्रसक्त्या तत्र तन्निषेधसम्भवेऽपि अष्टमीत्वेऽप्रसक्तात्वात्तस्याः प्रतिषेधस्यात्यन्तमयुक्तत्वमेव। मध्यस्थोक्तिदृशोपन्यासोऽसावित्यपि नाभिनन्द्यं प्रस्तावान्तरत्वात्।

"पञ्चाङ्गदृष्टक्षयप्रयुक्तौदयिकीत्वाभावात्" इति वाक्यादुक्तमौदयिकीत्वाभावस्य क्षयप्रयुक्तत्वमप्यसङ्गतम्, औदयिकीत्वाभावं क्षयशब्दार्थतया निरुच्य तस्मिन्नेव तत्प्रयुक्तत्ववाचोऽनौचित्यात्। क्षयदर्शनप्रयुक्तत्वेऽपि तात्पर्यवर्णनं न युक्तम्? विषयस्य ज्ञानप्रयुक्तत्वाभावात्, पञ्चाङ्गदृष्टक्षयप्रयुक्तशब्दस्य पञ्चाङ्गद्वारकक्षयदर्शनविदितार्थकतया न दोष इत्यप्युक्तिरयुक्ता क्षयदर्शनस्य क्षयात्मकौदयिकीत्वाभावस्य वेदनेऽप्रयोजकत्वात्।

किञ्च एकत्रौदयिकीत्वाभावस्य सूर्योदयानन्तरोत्पन्नत्वप्रयुक्ततायाः अन्यत्रोदयसम्बन्धाभावप्रयुक्ततायाः अपरत्र च पञ्चाङ्गदृष्टक्षयप्रयुक्ततायाः कथनं तत्प्रयोजकापरिज्ञानं पताकाकृतः प्रकाशयति।

"क्षये दृष्टे सति" इत्यस्य ( उदयसम्बन्धाभावे सति ) इति विवरणदानन्तु नितरां पदार्थापरिचयप्रत्यायकम्, योगाचारं तदनुचरितारं चापहाय केनापि ज्ञानज्ञेययोरैक्यानङ्गीकारात्। वस्तुतस्तेनापि ज्ञानाकारेणैव ज्ञेयस्यान्यथाकृतत्वेन तयोरैक्यास्वीकारात्।

अष्टमे पृष्ठे औदयिकीत्वाभावस्य क्षयशब्दार्थत्वमुक्त्वा पुनर्नवमे पृष्ठे "क्षयः—व्यपदेशाभावः" इत्येवं क्षयशब्दस्य विवरणमपि पताकाकृति किमनुमापयति ? विचारणीयमेतद्बुधैः, इति दिक्।

अत्रैव पृष्ठे "तिसृभ्यो हि करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः" इति स्तोत्रीयर्ग्गतक्रमवैपरीत्यविधानं विष्टुतौ तद्वत्' इति ग्रन्थेन तेनोक्तम् यद् यथा स्तोत्रीयाणाम् ऋचां क्रमः "तिसृभ्यो हि" इत्यादिना विष्टुतौ वैपरीत्येन विधीयते, अर्थात् उत्तमायाः प्रथमायाम्, प्रथमायाः मध्यमायाम् मध्यमायाश्च ऋचः क्रम उत्तमायाम् ऋचि विधीयते तथैवात्र "क्षये पूर्वा तिथिः कार्या" इति वचनं टिप्पणानुसारेण अनौदयिकीमष्टम्यादितिथिमौदयिकीम् औदयिकीञ्च सप्तम्यादिमनौदयिकीं विधत्त इति, एतदपि प्रकृते न घटते, यतो हि "तिसृभ्यो हि" इत्यादिवाक्ये वैपरीत्यं स्पष्टं निर्दिष्टम्, अत्र तु पताकाकृतो मतेन क्षीणतिथौ पूर्वागतस्यौदयिकीत्वस्योक्तावपि पूर्वतिथावनौदयिकीत्वस्य स्पष्टमनुक्तत्वात्। उत्तरस्यास्तद्दिने औदयिकीत्वस्योक्त्या पूर्वस्यास्तद्राहित्यं लभ्यत एवेति चेत्,- न ?- तथा सति दृष्टान्तवाक्येऽपि उत्तमायाः प्रथमात्वोक्त्या क्रमेण प्रथममध्यमयोर्मध्यमोत्तमात्वलाभस्य सम्भवेन शब्दतस्तदुक्तेर्वैयर्थ्यापत्तेः। दृष्टान्तवैषम्यमप्यत्र दुर्वारम्, यतो हि दृष्टान्तवाक्यम् ऋचां पौर्वापर्यं परावर्तयति प्रकृतवचस्तु पताकाकृन्मतेऽपि पूर्वोत्तरतिथ्योः पौर्वापर्यं नान्यथयति।

तदीयं तद्वचसो द्वितीयं व्याख्यानञ्चाष्टमे पृष्ठ इत्थमङ्कितम्—

"अथवा पूर्वा इत्येतदेवोद्देश्यवाचकं पदम्, प्रकरणाद् योग्यताव-

लाद् वा तिथिरिति लभ्यते, टिप्पणे पर्वतिथीनां क्षये दृष्टे सति पूर्वा तिथिः, तिथिः– पर्वतिथिः कार्या इत्यर्थः।

क्षीणत्वेन दृष्टाया अष्टम्यादिपर्वतिथेः पूर्वस्यां सप्तम्यादौ कियन्तोंऽशा वर्तन्त इति न ते विधातव्याः "अप्राप्ते शास्त्रमर्थवत्" इति न्यायात्, किन्तु अप्राप्तसूर्योदयावधिकांशानामेव विधानेन, अष्टम्यादिपर्वतिथिरेव पूर्वस्याः टिप्पणे औदयिकीत्वेन दृष्टायास्सप्तम्यादितिथेः स्थाने औदयिकी विधेयेति फलति" इति।

अत्र "प्रकरणाद् योग्यताबलाद्वा" इत्युक्त्या प्रकरणस्यासत्त्वं योग्यताऽऽपेक्षया दुर्बलत्वं वाऽभिप्रेतं प्रतिभाति, तयोः कतरत्सम्मतमिति पताकाकारः प्रष्टव्यो भवति, आद्यस्य सम्मतत्वोक्तौ पूर्वव्याख्यानोक्तदिशा तिथिपदस्य प्रकरणात्पर्वतिथिपरत्वं मन्यमानस्य तिथिप्रकरणाभावसूचनं न संगच्छते, द्वितीयस्य सम्मतत्वोक्तौ पञ्चविंशे पृष्ठे तस्य दौर्बल्यनिरासो न शोभते।

एवम् "क्षीणत्वेन दृष्टाया अष्टम्यादिपर्वतिथेः पूर्वस्यां सप्तम्यादौ कियन्तोंऽशा वर्तन्त इति न ते विधातव्याः" इति वाक्याभिप्रेतमपि पृच्छ्यते पताकाकारः।

क्षयदिने सूर्योदयात् कियत्कालानन्तरमष्टम्यादिप्रवृत्तिस्थले पूर्वस्यां सप्तम्यादौ कियन्तोंऽशाः वर्तन्ते" इत्युक्तेः क आशयःस्यात्? यथाश्रुतशब्दगम्यस्तु अयुक्त एव, सप्तम्यनन्तरप्रवृत्ततिथेरंशानां सप्तम्यां वर्तनासम्भवात्, "यदि पूर्वस्याम् सप्तम्यादौ" इत्यनेन सूर्योदयकाले सप्तम्यादिनोपलक्षिते दिने इत्यर्थोऽभिप्रेततया वर्ण्यते, तदा तु तत्र क्षीणाष्टम्यादेः कात्स्न्येनैव वर्तमानतया "कियन्तोंऽशाः वर्तन्ते" इत्युक्तिरयुक्ता स्यात्। न च पताकाकृत्परिपोषणीये पक्षे परमार्थतः पर्वतिथीनां क्षयाभावेन क्षीणतया निर्दिष्टानामष्टम्यादीनां सूर्योदयावधिकानामप्यंशानाम् सत्तया तेषां च टिप्पणप्रवेदितादष्टम्यादिप्रवृत्तिकालादुत्तरमसत्तया "कियन्तोंऽशाः वर्तन्ते" इत्युक्तिर्युक्तैवेति वाच्यम्, तत्पक्षे तादृशांशानां तद्दिने विधिं विनापि सत्त्वेन विधेयत्वानुपपत्त्या तद्वचसस्तद्विधानमुखेनाष्टम्यादि-

विधायकतावर्णनस्यासङ्गत्यापत्तेः । तद्वाक्येतरेणावेदिततयाऽपूर्वताऽऽस्पदानां तेषां बोधकतया तद्विधायकताव्यपदेशस्तत्रेति नानवद्या वाक्, तथा सति "अपूर्वविधिविधायकेन" इति शब्दस्यापि "विधीयते बोध्यत इति विधिः, अपूर्वश्चासौ विधिरित्यपूर्वविधिः-अपूर्वो बोध्यः, तस्य विधायकेन बोधकेन इत्यर्थाभिप्रायेण तद्वचसि सम्भवत्प्रयोगतया तच्छब्दमादाय, पताकायाः षष्ठे पृष्ठे मध्यस्थावमाननामन्दमनोरथस्य मृतिगर्ते निपातापत्तेः ।

एवंचैतदालोचनाया अयं निष्कर्षो ऽवसेयो यत् "क्षये पूर्वा तिथिः कार्या" इति वचनं क्षीणपर्वतिथावौदयिकीत्वस्य क्षीणतिथिपूर्वतिथिविशिष्टे क्षयदिवसोदरवर्तिनि काले क्षीणतिथेः सूर्योदयावधिकतदंशानां वा विधायकं बोधकम् वा न सम्भवति, टिप्पणदृष्ट्या अशक्यत्वाद् बाध्यत्वाच्च, पताकाकृतस्तदादेशकृतश्च दृष्ट्या विधिनिरपेक्षसिद्धिकत्वात् टिप्पणप्रतिबद्धबोधकत्वाच्च । टिप्पणं दुर्बलम् "क्षये पूर्वा तिथिः कार्या" इति शास्त्रं च ततः प्रबलमिति न ततस्तत्साध्यबोधप्रतिरोध इति न शङ्कनीयम्, स्वविषये शास्त्रस्य प्राबल्येऽपि टिप्पणस्य तदुपजीव्यज्योतिषशास्त्रस्य च विषये तिथिप्रवेशादिरूपे तच्छास्त्रस्यैव दौर्बल्यात् । जैनागमविसंवादितया टिप्पणं हीनबलम्, तच्छास्त्रं च जैनागमसंवादितया बलवत्तरमित्यपि वचो न वाच्यम्. पताकाकृत्परिगृहीतपद्योपज्ञेन तच्छास्त्रप्रतिपाद्यतयाऽभिप्रेतस्यार्थस्य प्रत्याययितुरेकस्याप्यागमवचसोऽधुनावधि धीपद्धतावनवतारात् ।

किञ्च पताकाकृन्मते "क्षये पूर्वा तिथिः कार्या" इति वचनं नाचार्योमास्वातिभी रचितं न वा जैनागमसागरादुन्नीतं किन्तु वैदिकसम्प्रदायग्रन्थाद् गृहीत्वोद्घोषितम्, तथा च टिप्पणतद्वचसोरुभयोरेव परकीयत्वे तयोः पूर्वं दुर्बलमुत्तरं बलवत्तरमिति कथं शक्यते वक्तुम् ? वाचकमुख्यैः परिग्रहणादुत्तरं बलवत्तरं पूर्वञ्च तद्राहित्याद् दुर्बलमित्यपि कथा व्यथाफलैव, जैनटिप्पणस्य प्रागेव लुप्ततया तिथ्यादिपरिचयाय सम्प्रदायान्तरटिप्पणस्य तैरङ्गीकारात्, अन्यथा पताकाकर्तुस्तन्नियोक्तुश्च नये

पर्वतिथीनां क्षयवृद्धयोर्जैनागमस्य तदुपजीविटिप्पणस्य चासम्मतत्वेन "क्षये पूर्वा तिथिः कार्या" इति वचनोद्घोषस्याकर्तव्यत्वापत्तेः ।

पताकायाः **नवमे पृष्ठे** "पूर्वमाचार्य-श्रीसागरानन्दसूरिमतं महताऽऽडम्बरेण खण्डयन् अन्ततस्तदेव प्रकारान्तरेण साधयन् मध्यस्थः" इति पताकाकृद्वचनं तमस्तेजसोरिव विभिन्नयोस्सूरिमध्यस्थमतयोरभेदवेदयितुस्तस्य तदुभयोरेव मतापरिचयमवद्योतयति, तथा हि श्रीसूरीणां मते तद्वचः पर्वतिथीनामौदयिकीत्वं विदधत्तासां क्षयाभावे तत्पूर्ववर्तिनीनामपर्वतिथीनाञ्च क्षये पर्यवस्यति, मध्यस्थमते च क्षीणा पर्वतिथिरक्षीणपूर्वतिथिरूपतां वहन्ती तदौदयिकीत्वं लभते तद्वचसो बलेन, एवञ्च श्रीसूरिमते टिप्पणे औदयिकीत्वेन निर्दिष्टाऽप्यपर्वतिथिरनौदयिकी-क्षीणत्वेन निर्दिष्टा च पर्वतिथिरौदयिकी, मध्यस्थमते च टिप्पणानुसारेणापर्वतिथिरप्यौदयिकी, पर्वतिथिश्च क्षीणा सत्यपि "क्षये पूर्वा तिथिः कार्या" इति वचनानुसारेण औदयिकापर्वतिथ्यात्मभावेनौदयिकी। एवमत्यल्पविदामपि स्पष्टवेद्यं तयोर्मतभेदं निर्भेदं ब्रुवाणः पताकाकारः कस्यां कोटौ निवेशमर्हतीति तेनैव निश्चेयम् ।

"वृद्धिः कार्या तथोत्तरा" इत्युत्तरार्धस्य पताकाकृत्कर्तृकव्याख्यायाः

**परीक्षणम्ः—**

पताकायाः **नवमे पृष्ठे** "वृद्धौ कार्या तथोत्तरा" इत्यस्यांशस्य तथैव व्याख्यां प्रदर्शयिष्यामः—इत्येवं प्रतिज्ञायोक्तम्ः" कस्याश्चित् पर्वतिथेर्दिनद्वयोदयव्यापित्वरूपवृद्धौ टिप्पणे दृष्टायां उत्तरा द्वितीयदिनोदयस्पर्शिन्येवौदयिकी कार्या, न पूर्वेति, अनेन वचनेन पूर्वस्या औदयिकीत्वं परिसंख्यायते, सर्वत्र ह्यौदयिक्या एवाराधनाङ्गत्वं विहितम्, प्रकृते दिनद्वयेऽपि पर्वतिथिरौदयिकी भवति । दिनद्वये त्वाराधनं न भवितुमर्हति, आराधनाङ्गत्वेन तिथेर्विधानात्– आराधनस्य प्रधानत्वा-

त्तिथेश्च गुणभूतत्वात् गुणभूततिथ्यनुरोधेनाराधनस्य प्रधानभूतस्य द्विःकरणायोगात् गुणानुरोधेन–प्रधानवृत्तेरन्याय्यत्वात्। अत एकस्मिन्नेव दिन आराधनार्थमौदयिकीत्वमपेक्षितम्, तत्राविशेषादुभयोरपि पाक्षिकतया प्राप्तौ सत्यामनेन वचनेन पूर्वस्यामौदयिकीत्वम् परिसंख्यायते—"पूर्वा नौदयिकी भवितुमर्हति किन्तूत्तरैवेति"।

अत्रेदं विनिवेदयामः—

"वृद्धौ कार्या तथोत्तरा" इति वचसः परिसंख्याविधिभावेन सूर्योदयद्वयसहचर्यास्तिथेरौदयिकीत्वप्रतिषेधकत्वं पूर्वदिने, इति यत् पताकाकृता कथितम्, तन्न सङ्गतम्, पूर्वदिनेऽपि गणितज्योतिषानुसारेण परमार्थत औदयिक्यास्तिथेस्तद्दिनेऽनौदयिकीत्वप्रत्यायकत्वे तद्वचसोऽप्रामाण्यापत्तेः। न च जैनागमे एकस्याः पर्वतिथेर्दिनद्वय औदयिकीत्वस्यासम्मततया टिप्पणे दिनद्वय औदयिकीत्वेन निर्दिष्टायाः पर्वतिथेः प्रथमदिन औदयिकीत्वविरहवेदयितुस्तद्वचसः प्रामाण्यमक्षुण्णमेवेति वाच्यम्, विकल्पासहत्वात्, तथा हि वाक्यमिदं स्वेतरेण जैनागमान्तर्गतेन वाक्येन कथितमर्थमनुवदति, उत स्वोद्घोषक्रमहिम्नैव निर्दिष्टमर्थं बोधयति? द्वितीयेऽपि स महिमा गणितवैदुष्यवैभवरूपः तपोऽतिशयवशाविर्भूतपदार्थसार्थसाक्षात्करणसामर्थ्यरूपो वा? नाद्यः, तादृशस्य जैनागमवाक्यस्याप्राप्तत्वात्, न द्वितीयः स्वीयप्रथमेन, गणितस्य पर्वापर्वपार्थक्यपरित्यागेनैव प्रवृत्तिमत्ताया तत्साहाय्येन "जैनागमे पर्वत्वेन सम्प्रतिपन्नास्तिथयो न क्षीयन्ते न च वर्धन्ते, किन्त्वन्या एव" इति निर्णेतुमशक्यत्वात्।

नापि स स्वद्वितीयेन, तथा सामर्थ्ये तादृशस्य पर्वतिथिप्रवृत्तिविपरीतवेदिनष्टिप्पणस्य पताकाकृन्मतानुसारेण सम्प्रदायान्तरीयतद्वचसश्च परिग्रहस्यानुपपत्तेः, किन्तु "किं सेव्यते सुमनसां मनसापि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण" इति पण्डितराजजगन्नाथन्यायानुसारेण पुनर्विशुद्धतरटिप्पणप्रवर्तनस्यैवोपपत्तेः।

अन्यसर्वांशे यथार्थतया पर्वतिथिविषये तद्वचःसूच्यमानसंशोधनेन सह प्रथमप्रवृत्तालौकिकटिप्पणस्य संग्राह्यत्वसम्भवादेव तथा न कृतमित्यादि किन्तु कल्पनामात्रत्वात् आर्हतसम्मानसमुचितसंरक्षणाप्रवीणत्वाच्चानुपादेयमेव । नैतावताऽचार्योमास्वातीनां काचिन्न्यूनता निर्विवक्षिता किन्तु कथितार्थस्य तत्सम्मतत्वे प्रमाणक्षीणतैव ।

अतष्टिप्पणेन प्रथमदिनेऽप्यौदयिकीत्वेन निर्दिष्टायामष्टम्यादौ तद्दिनेऽनौदयिकीत्वबोधने तस्य वचसः प्रामाण्यपरिक्षयोऽप्रतीकार्य एवेति निर्विवादम्। सिद्धान्ते च यथा तद्वचसः प्रमाण्यपरिरक्षणं तथा वक्ष्यते।

न च टिप्पणानुसारेण भवतु नाम पर्वतिथेः पूर्वदिनेऽपि सूर्योदयस्पर्शित्वलक्षणमौदयिकीत्वं किन्तु यादृशं पारिभाषिकमाराधनाद्युपयुक्तं तादृशमेव तद्वचसा प्रथमदिने पर्वतिथ्यां प्रतिषिध्यते, तच्च न टिप्पणस्य तदुपजीव्यज्यौतिषस्य वा विषय इति वाच्यम्, पारिभाषिकस्य तस्य प्रदर्शनं विना तथा कथाया अनौचित्यात्, तस्य सिद्धान्तेऽपि सहत्वेनापूर्वत्वाभावात्, तदप्रदर्शनस्य पताकाकृतस्तत्प्रत्ययापायप्रत्यायकत्वात्, तादृशस्य च तथैकदिनेऽपि तिथिद्वये सम्भवेन पर्वानन्तरपर्वतिथिक्षयस्थले दिनभेदेन तिथिद्वयाराधनव्यवस्थाया अयौक्तिकत्वाच्च ।

अत्र प्रसङ्गे पताकाकृतोक्तम् "आराधनाङ्गत्वेन तिथेर्विधानात् आराधनस्य प्रधानत्वात्तिथेश्च गुणभूतत्वात् गुणभूततिथ्यनुरोधेनाराधनस्य प्रधानभूतस्य द्विःकरणायोगात् गुणानुरोधेन प्रधानवृत्तेरन्याय्यत्वात्" इति वचनमप्यालोचनमर्हति, तथाह्येतेन वाक्येन 'तिथ्यनुरोधेनाराधनस्य द्विःकरणस्यायुक्तत्वमुक्तम्' तत्र च तिथेः गौणत्वमाराधनस्य च प्रधानत्वं हेतुतयोपन्यस्तम् । परमिदमसङ्गतम् । यतो हि पर्वतिथिमत्सु दिनेषु याःपर्वतिथ्याराधनाः विहितास्ताः पर्वतिथिनिमित्तिका इति तासां पर्वतिथ्यनुविधानं न्याय्यमेव नैमित्तिकस्य निमित्तानुसारितायाः सर्वसम्प्रतिपन्नत्वात् ।

एवञ्च यथा निमित्तभूतायाः पर्वतिथेरेकदिने औदयिकीत्वे एकदिने तदाराधना क्रियते तथा तस्या दिनद्वय औदयिकीत्वे दिनद्वये तदाराधनायाः कर्तव्यता न्यायौचित्यप्राप्ता । अत एव च तादृशतिथेः पूर्वदिने आराधनायाः निरोधाय तस्मिन् दिने तस्या औदयिकीत्वस्य प्रतिषेधं कृत्वा द्वितीयस्मिन्नेव दिने तद्व्यवस्थापनं संगच्छते, अन्यथाऽऽराधनायास्तिथेरननुचरीत्वे वृद्धायास्तिथेः पूर्वदिनेऽप्यौदयिकीत्वेऽपि तद्दिने तस्या अप्राप्त्या तत्प्रयासस्य वैयर्थ्यापत्तेः । नचाराधनायास्तिथ्यनुरोधेन प्रवृत्त्यभ्युपगमे पूर्वतिथेर्दिनद्वय औदयिकीत्वे दिनद्वये एव तस्या आराधनमपरिहार्यमिति वाच्यं "वृद्धौ कार्या" इति वचसा पूर्वदिने परिसंख्याय द्वितीय दिन एव तस्या व्यवस्थापनात् । न च पाक्षिकप्रवृत्त्यभावेन तस्याः परिसङ्ख्यानमनुचितमिति वाच्यम् "एका पर्वतिथिरेकस्मिन्नेव दिने औदयिकी" इति जैनजगत्प्रसिद्ध्यनुरोधेन टिप्पणेन दिनद्वये एकपर्वतिथेः निर्दिष्टस्याप्यौदयिकीत्वस्य विनिगमनाविरहेण पूर्वोत्तरदिनयोः पाक्षिकप्राप्तेरिव "एका पर्वतिथिरेकत्रैव दिने आराध्यत्वेन सम्मता" इत्यार्हतप्रजाप्रसिद्ध्यनुरोधेन आराधनाया अपि पाक्षिकप्राप्तिसम्भवात्, पताकाया एकादशे पृष्ठे "उभयत्राप्यौदयिकीत्वसत्त्वाद् दिनद्वयेऽपि आराधनं पाक्षिकतया प्राप्तम्" इति वदता पताकाकृता तत्स्वीकाराच्च ।

**वस्तुतस्तु** समुच्चित्य प्राप्तिनियतायाः परिसंख्यायाः पाक्षिकप्राप्तिस्थले समर्थनमत्यन्तमुपहासास्पदम् ।

अस्मिन्नेव प्रकरणे **एकादशे पृष्ठे** तत्र "वृद्धौ कार्या तथोत्तरा" इत्यनेनोत्तरस्या औदयिकीत्वबोधनपूर्वकं पूर्वस्या औदयिकीत्वं व्यावर्त्यते । औदयिकीत्वाभावाच्च सा अपर्वतिथिः सम्पद्यते । तत्पूर्ववर्तिनी सप्तम्येवौदयिकी द्विः सूर्योदयस्पर्शिनीति सैव वृद्धा" इति यत् पताकाकृतोक्तम्, तदत्यन्तमसत्, उत्तरस्याः पूर्वस्याश्च तिथेरेकतया उत्तरस्या औदयिकीत्वस्य द्वितीयस्यास्तद्राहित्यस्य चासम्भवात् । उत्तरदिने तत्तिथे-

रौदयिकीत्वं पूर्वदिने चौदयिकीत्वमित्यर्थे तात्पर्यमित्यपि वचनमनुचित-मेव; ज्यौतिषप्रतिकूलप्रतिपादने तद्वचस्तात्पर्यवर्णनायाः वर्णितरीत्या असङ्गतत्वात्, ज्यौतिषापेक्षया धर्मशास्त्रत्वाद् बलवत्तया तद्वचसस्तद्विरु-द्धाभिधाने न क्षीणशक्तिकमित्यपि कथनं न शोभनं ज्यौतिषाविरोधेनो-पपत्तिसम्भवे तद्विरोधेन धर्मशास्त्रस्याप्यर्थवर्णनाया अवाञ्छनीयत्वात्। यथा च तदविरोधेनापि तद्वच उपपद्यते तथा सिद्धान्तव्याख्योपन्यासे प्रदर्शयिष्यते।

"औदयिकीत्वाभावाच्च सा अपर्वतिथिः सम्पद्यते" इत्यपि मतिः पताकाकारस्य दुर्मतिरेव, पूर्वोत्तरदिवसीयास्तस्या अभिन्नतया उत्तरदि-नेऽपि तस्या अपर्वतिथित्वापत्तेः, पूर्वदिनेऽनौदयिकीत्वेन तद्दिने साऽपर्व-तिथिः सम्पद्यत इत्यर्थो विवक्षित इत्यपि वचो न चारु, उक्तप्रकारेण पूर्वदिनेऽपि तस्या औदयिकीत्वाभावबोधने तद्वचसोऽसामर्थ्येन गणितेन बोधितस्य तस्यास्तद्दिने औदयिकीत्वस्याक्षुण्णत्वात्, पर्वतिथि-त्वेऽष्टमीत्वाद्यन्यतमवत्ताया एव तन्त्रतया औदयिकीत्वाभावप्रयोज्याभाव प्रतियोगित्वायोगाच्च, अन्यथा—क्षीणाष्टम्यादौ तदभावात् पर्वतिथित्वा-भावस्य सम्पन्नतया तस्याः पर्वतिथ्याराधनानङ्गत्वलाभेन तदाराधनो-पपादनाय "क्षये पूर्वा तिथिः कार्या" इति पूर्वार्धस्यानुत्थानापत्तेः। न च वृद्धायास्तिथेः पूर्वदिनेऽपि पर्वतिथित्वस्वीकारे तद्दिनेऽपि तदा-राधनाऽऽपत्तिरिति वाच्यम्, अत एव "वृद्धौ कार्या तथोत्तरा" इति वचनेन वाचकमुख्येनोत्तरस्यामेव तत्करणीयताया व्यवस्थापनात्, तथा च तस्याः प्रथमदिने पर्वतिथित्वेऽपि उक्तवाचकमुख्यवचनानुरो-धादेव तद्दिने न तदाराधनेति भावः।

इदञ्च सेनप्रश्नस्य तृतीयोल्लासे पण्डितपद्मानन्दगणिप्रश्नोत्तर-प्रसङ्गे स्पष्टमेवोक्तमस्ति, तद्यथा—अथ यदि प्रत्याख्यानवेलायां विलोक्यते, तदा तु पूर्वदिने द्वितयमप्यस्ति, प्रत्याख्यानवेलायां समग्रदिनेऽपि, इति सुष्ठु आराधनं भवतीति प्रश्नः।

**अत्रोत्तरम्**—क्षये पूर्वा तिथिः कार्या, वृद्धौ कार्या तथोत्तरा "इति उमास्वातिवाचकवचनप्रामाण्याद् वृद्धौ सत्यां स्वल्पाऽप्यग्रेतनी तिथिः प्रमाणमिति"। यदि पुनः पूर्वदिनेऽपर्वतिथित्वमष्टम्यादेरभिप्रेतं स्यात् कथन्न तत्प्रश्नोत्तरतया स्पष्टमेव तत्रोक्तं स्यात्, किन्तु वृद्धिस्वीकृतिपूर्वकं तद्वचनबलात्तस्या आराधने प्रामाण्यं द्वितीयदिन एवोच्येत, अतः स्पष्टमस्ति यत् पताकाकारं तदादेष्टारं च विहाय न कश्चित् तद्वचसो वृद्धायास्तिथेः पूर्वदिनेऽपर्वतिथिव्यवस्थितिफलकत्वं मन्यते।

"तत्पूर्ववर्तिनी सप्तम्येवौदयिकी द्विः सूर्योदयस्पर्शिनी" इति वचनमपि तस्य युक्तिहीनम्, वृद्धायास्तिथेः पूर्वदिने आराधनाप्रसङ्गभङ्गाय तस्यास्तद्दिनेऽनौदयिकीकरणस्य पताकाकृन्मते आवश्यकत्वेऽपि सप्तम्यास्तद्दिने औदयिकीत्वकल्पनाया अनावश्यकत्वात्। "तिथिरहितः सृष्टिकालो न भवति" इति नियमानुरोधेन पूर्वदिवसीयसूर्योदयकालस्य तिथिमत्त्वोपपादनाय सप्तमीकल्पनमावश्यकमिति तु सत्, ज्योतिषोक्तस्य तद्दिनेऽष्टम्या औदयिकीत्वस्यास्वीकृतेरिव तन्नियमस्यास्वीकृतेः सम्भवात्।

एकत्र मर्यादामुन्मृद्य व्यवहर्त्तुरितरत्रापि मर्यादामर्दने त्रपाभावात्।

अत्र प्रकरणे "वृद्धौ कार्या तथोत्तरा" इति वचसः फलतः परिसंख्याविधित्वमुपपादयता परिसंख्यायां सम्भवतस्त्रैदोष्यस्य निराससूचनायैकादशे पृष्ठे पताकाकृता यदुक्तम् "लोकतः पूर्वं शास्त्रस्य सामान्यशास्त्रतः पूर्वं वा विशेषशास्त्रस्य प्रवृत्तेः पूर्वमेव 'वृद्धौ कार्या तथोत्तरा' इत्यस्य प्रवृत्तत्वात् एतच्छास्त्रप्रवृत्तिदशायां टिप्पणया अप्रवृत्तत्वात्" इत्यादि, तदत्यन्तमसङ्गतम्, टिप्पणस्य प्राक् प्रवृत्तत्त्वाभावे "वृद्धौ कार्या" इत्यादिवचस उत्थानस्यैवासम्भवात्, अयम्भावः—टिप्पणेऽष्टम्यादिपर्वतिथेः सूर्योदयद्वयस्पर्शित्वलक्षणायां वृद्धौ दृष्टायां द्वितीयदिन एव तस्या आराधनौचित्यस्य व्यवस्थापनाय "वृद्धौ कार्या" इतिवचनं प्रवर्तते।

यदि पुनष्टिप्पणेन वृद्धिर्विहिता न स्यात् कुतस्तदा वचनमेतदवसरं लभेत । अत एव मन्ये, पताकाकृताऽपि नवमे पृष्ठे "कस्याश्चिदपर्वतिथेर्दिनद्वयोदयव्यापित्वरूपवृद्धौ टिप्पणे दृष्टायाम् उत्तरा द्वितीयदिनीयोदयस्पर्शिन्येवौदयिकी कार्या, न पूर्वेति" इत्येवं "वृद्धौ कार्या तथोत्तरा" इत्युत्तरार्धं विवृण्वता स्वीकृतमेतत् । एवंच पूर्वं नवमे पृष्ठे तद्वचसः टिप्पणप्रवृत्तिपूर्वकत्वमुक्त्वा पश्चादेकादशे पृष्ठे तत्रैव प्रकरणे तस्यास्तदपूर्वकत्वकथनं लेखितुरत्यन्तमनवधानं ध्वनयति ।

उत्तरार्द्धस्य द्वितीयव्याख्यायाः विमर्दनम्—

पताकाया **एकादशे पृष्ठे** "लौकिकटिप्पणे कस्याश्चित्तिथेर्वृद्धौ दृष्टायाम् उत्तरा द्वितीयैव तिथिः तथा पर्वतिथिः कार्या इति, अर्थात् टिप्पणे पर्वतिथेर्वृद्धौ सत्यामुभयत्रापि पाक्षिकतया पर्वतिथित्वप्राप्तौ एतच्छास्त्रस्य नियामकत्वे सिद्धेऽपि नियमशास्त्रस्य विधिमुखेन प्रवृत्तेरेव शास्त्रसम्मतत्वात् तादृशोऽर्थः सुसम्पाद्यः । एवञ्च द्वितीयस्यां पर्वतिथावष्टम्यादावौदयिकीत्वं निम्यते द्वितीयैव तिथिरौदयिकी भवेन्न पूर्वेति, एवञ्चानेन शास्त्रेण द्वितीयाया एवौदयिकीत्वबोधनात् प्रथमायास्तदभावात् तत्प्राकृतन्यास्सप्तम्या एव वृद्धिः इति सिद्धं भवति इति ग्रन्थेन पताकाकृता "वृद्धौ कार्या तथोत्तरा" इति वचनस्य वृद्धायास्तिथेर्दिनद्वये पाक्षिकप्राप्तस्य पर्वतिथित्वस्य पूर्वदिने प्रतिषेधाय द्वितीयदिने औदयिकीत्वनियामकत्वम् अथवा पर्वतिथित्वस्यैव नियामकत्वमुक्तम् । **परमिदमत्यन्तमयुक्तम्** वृद्धायां तिथौ पूर्वोत्तरदिनयोः पर्वतिथित्वस्य पाक्षिकप्राप्तेः प्रथमदिने ततो निवृत्तेश्चासम्भवात्, कुत इति चेत् श्रूयताम्- । पर्वतिथित्वं नाम आगमेनावश्याराध्यत्वेन निर्दिष्टतिथित्वम्, प्रामाणिकैः शास्त्रकारैः पर्वतिथिशब्देन व्यवहृतत्वम्, अष्टमीत्वाद्यन्यतमवत्त्वम्, औदयिकीत्वविशिष्टतादृशान्यतमवत्त्वं वा ? तत्र न प्रथमं पाक्षिकप्राप्तम् वृद्धतिथौ प्रथमेऽहनि प्रतिषेध्यं वा भवितुमर्हति, अवश्याराध्य-

त्वेनागमनिर्देश्यतावच्छेदकस्याष्टमीत्वाद्यन्यतमधर्मस्य वृद्धायां तिथौ दिनद्वय एव नियतानिवार्यसत्त्वेन आगमेनावश्याराध्यत्वेन निर्निष्टतिथित्वस्यापि तथैव सत्त्वात्, अत एव द्वितीयमपि तथा भवितुं न युज्यते, शास्त्रकारीयपर्वतिथिव्यवहारविषयतावच्छेदकस्याष्टमीत्वाद्यन्यतमधर्मस्यैव तन्नियतस्य तस्यापि दिनद्वये तादृशतिथौ निष्कम्पन्निवासात्, तृतीयं तुरीयं वाऽन्यत एव पाक्षिकप्राप्तं पूर्वदिने वृद्धतिथितो व्यपनीतं वा नार्हति भवितुम्, केवलाया औदयिकीत्वसहिताया वा ऽष्टमीत्वाद्यन्यतमवत्तायाः द्वयोरेव दिनयोस्तादृशतिथौ निर्विघ्नं विद्यमानत्वात्।

न चैवम् "एका तिथिरेकस्मिन्नेव दिने पर्वतिथिर्भवति" इतिसिद्धान्तप्रवादो व्याहन्येतेतिचेन्न, तादृशप्रवादस्यास्वीकृतितिरस्कृतत्वात्, किन्तु "एका तिथिःदिनद्वये पर्वतिथिर्भवन्ती अपि एकत्रैव दिने आराध्या भवति" इतिसिद्धान्तप्रवादस्यैव वास्तविकत्वात्। सिद्धान्ते च यथा न दोषस्तथा "वृद्धौ कार्या तथोत्तरा" इत्यंशस्य व्याख्याकरणकाले वक्ष्यते।

अनुपदमुद्धृत एव ग्रन्थे पूर्वं "पाक्षिकतया पर्वतिथित्वप्राप्तौ" इत्युक्त्वा पश्चादुत्तरस्मिन्नेव वाक्ये एवञ्च द्वितीयस्यां पर्वतिथावष्टम्यादावौदयिकीत्वं नियम्यते" इति कथनं पताकाकृतो महन्मीमांसामांसलमितत्वमवद्योतयति प्रत्याययति चैतद् यत् "पाक्षिकी प्राप्तिरेकस्य नियमनञ्चान्यस्य" इति गुह्यतरं ज्ञानं निजगुरुचरणसरोजसेवावशात्तेनैवैकेन समासादितम्। औदयिकीत्वनियमनं पर्वतिथित्वनियमनपर्यवसायितया न निन्द्यतामर्हतीत्यपि नोचितं वचनम्, पाक्षिकतया प्राप्तस्य साक्षान्नियामकतात्यागस्य निर्बीजत्वात्।

किञ्च "एवञ्चानेन शास्त्रेण द्वितीयाया एवौदयिकीत्वबोधनात् प्रथमायास्तदभावात् "इति ग्रन्थस्तं प्रश्नं पुनः पुरो नयति यत् प्रथमे दिनेऽपि पञ्चाङ्गानुसारेणौदयिक्यामष्टम्यादौ तद्दिनेऽनौदयिकीत्व-

चोधने वचनस्यास्य प्रामाण्यं परित्राणार्हं कुतः स्यात् ? धर्मशास्त्रस्याप्येतस्य तिथिप्रवृत्त्यादिरूपे गणितज्यौतिषस्य विषये वैपरीत्यबोधनेऽक्षमत्वात् ।

"तत्राकृतन्याः सप्तम्या एव वृद्धिः" इति तदीयवाक्यभागोऽपि प्राच्य प्रश्नमिमं पुनः प्रोत्थापयति यद् वृद्धाया अष्टम्यादेः पूर्वदिने आराधनाप्रसक्तिनिराकृतिलाभाय तद्दिने तस्या अनौदयिकीत्वकल्पनायाः कथञ्चिदौचित्यसम्भवेऽपि पूर्वस्या अपर्वतिथेरौदयिकीत्वकल्पना तद्दिने किम्प्रयोजना ? सर्वस्य जन्यसदायतनस्य समयस्य तिथिमत्तानियमनिर्वाहाय सा कल्पनाऽपि सप्रयोजना, नातो निर्दिष्टं नोद्यमवतरति, इत्यपि कथनं न शोभनं, निर्णयादिकल्पनाविपिने विहरतः पताकाकृतस्तमुद्योजयतो वा तन्नियमनिकारेऽपि प्रतिकूलवैकल्येन कथितकल्पनाया व्यर्थक्लेशवहनस्यानुचितत्वात् ।

पताकायाः द्वादशे पृष्ठे "एवं सति यन्मध्यस्थेनैतच्छ्लोकपादव्याख्यानावसरे "तेन नियमविधिविधायकेन शास्त्रेण तिथिवृद्धौ उत्तरस्यामेवौदयिकीत्वं नियम्यत इति क्वचित् टिप्पणे तिथीनां वृद्धौ दृष्टायाम् आराधनार्थमुत्तरा द्वितीया तिथिः स्वीकर्तव्या" इति च परस्परविरुद्धं वचनं मध्यस्थस्य कथमुपादेयकोटिमारोहेत्" इति पताकाकृतो वाक्यमुपलभ्यते । अत्र स वाक्यरचनाप्रवीणः प्रष्टव्यो जायते यत् "यन्मध्यस्थेन" इत्यस्य "मध्यस्थस्य" इत्यस्य च कान्वयः को वा समन्वयः ? इति ।

अत्रैव पृष्ठे पूर्वोक्तग्रन्थोत्तरमेव "समानरूपतया श्रुते वाक्यद्वये "क्षये पूर्वा तिथिः कार्या" इत्यत्र सप्तम्यां पूर्वस्यामष्टमीविधानम्, अष्टमीत्वविधानं वा "वृद्धौ कार्या तथोत्तरा" इत्यत्र औदयिकीत्वनियमनम् इति वैरूप्याङ्गीकरणे किं प्रमाणम् ? किं वा फलम् ?" इति ग्रन्थः पताकाकर्तुर्दृष्टिमार्गमुपारोहति ।

अत्रापि स महाशयः प्रश्नार्हो यत्तेन स्वयमपि "क्षये पूर्वा तिथिः कार्या" इत्यत्र क्षीणाष्टम्यादावौदयिकीत्वे सप्तम्यादिपूर्वतिथिस्थाने क्षीणा-

ष्टम्यादेः सूर्योदयावधिकांशेषु वाऽपूर्वविधित्वम्, "वृद्धौ कार्या तथोत्तरा" इत्यत्र च पताकीयत्रयोदशपृष्ठैकादशपङ्क्तिगतस्य "नास्माकं पक्षेऽयं वाक्यार्थो यो मध्यस्थेनोल्लिखितः, किन्तु पर्वतिथित्वनियमनरूपः" इति तद्वचनस्यानुसारेण पर्वतिथित्वे नियामकत्वञ्च स्वीकुर्वता यद् वैरूप्यमङ्गीकृतम्, तत्र कीदृशं सारूप्यम्? यद्गर्वखर्वितविवेकतया तेन वस्तुतो निजोचित "मुखमस्तीतिवक्तव्यं दशहस्ता हरीतकी" इति न्यायं मध्यस्थस्पर्शिनं वदताऽवदातोऽपि मध्यस्थो मुधैव मालिन्यं निनीपितः।

द्वादशे पृष्ठे "वृद्धा तिथिः द्विरुदयं स्पृशतीति कतरा तिथिरौदयिकीति सन्देहे "वृद्धौ कार्या तथोत्तरा" इति नियम्यते इति मध्यस्थस्योक्तिन्तिरस्कर्तुम् "वृद्धायास्तिथेः द्व्युदयस्पर्शित्वे दिनद्वयेऽप्यौदयिकीत्वं स्वत एव सिध्यतीति कतरा तिथिरौदयिकीति सन्देहः कथमुदियात्? उभयोरौदयिकीत्वेन पाक्षिकत्वाभावान् "नियमः पाक्षिके सति" इति पक्षप्राप्तविषयनियमविधित्वं वा तस्य कथं स्यात्? "नियमविधिविधायकेन" इति शब्दे ते सर्वेऽपि दोषास्समुन्मिषन्ति ये "अपूर्वविधिविधायकेन" इत्यत्र समुद्भाविताः" इति वाक्यजातं पताकाकृताऽऽत्मनो मुखमार्गतो निस्सारितम्।

तत्र स उच्यते, यत्तेन मध्यस्थमनीषितन्निर्मलमपि मलिनीकृतं स्वात्मस्वभावेन, तथा हि न तावत् मध्यस्थो वृद्धायां तिथौ पञ्चाङ्गप्रसिद्धं सूर्योदयस्पर्शित्वलक्षणमौदयिकीत्वं सन्दिह्यमानतया विवक्षति किन्तु आराधनोपयुक्तं तत्, तच्च तादृशतिथौ नोभयदिने सम्मतं नियतं वा। अतो दिनद्वये सूर्योदयस्पर्शं कुर्वन्ती तिथिः कतरस्मिन् दिने आराधनौपयिकं तमाश्रयतीति सुघटमानं सन्देहोदयं प्रचिकाशयिषोर्मध्यस्थस्य निन्दायां प्रवर्तमानः पताकाकारः स्वस्य तादृशस्वभावतामभिव्यनक्तीति व्यक्तमेव भवति विदुषाम्। एवञ्च तादृशौदयिकीत्वस्योभयस्मिन् दिनेऽसिद्धतयाऽसम्मततया च पाक्षिकप्राप्तत्वे प्रत्यूहस्य प्रक्षीणत्वेन "पक्षप्राप्तविषयविषयकनियमविधित्वमपि" वृद्धौ कार्या तथोत्तरा" इति वाक्यस्य कथन्तापथात्पृथगेव।

विधीयत इति विधिः नियमश्चासौ विधिरिति नियमविधिस्तस्य विधायकेनेत्यर्थपरे "नियमविधिविधायकेन" इति शब्दे वैगुण्यलेशस्याप्यभावेन तत्रानेकदोषदर्शनं द्रष्टुरेव दोषकोपं गमयति, तेन विना दोषसमान्यशून्येऽनेकदोषदृष्टेरसम्भवात् ।

त्रयोदशे पृष्ठे "ननु महता प्रयासेन "वृद्धौ कार्या तथोत्तरा" इत्यस्य नियमविधित्वं मध्यस्थेनोक्तं दूषयद्भिर्भवद्भिस्स एव नियमविधिपक्षः स्वीकृतः कथमितिचेत्-नास्माकं पक्षेऽयं वाक्यार्थो यो मध्यस्थेनोल्लिखितः, किन्तु पर्वतिथित्वनियमनरूपः, पञ्चाङ्गे वृद्धौ क्षये वा कस्याश्चित्तिथेर्दृष्टे पर्वतिथिरेकैव भवतीति मध्यस्थेनापि स्वीकृतम् । अतश्च सत्यपि तिथेर्दिनद्वयेऽप्यौदयिकीत्वे आराधनस्यैकैव पर्वतिथिरपेक्षिता सा पूर्वा परा वेति सन्देहे परस्याः पक्षप्राप्तताया नियमनप्राप्तांशपूरणरूपं घटत एवेति नास्माकं पक्षे दोषलेशोऽपि" इति पताकाकृद्वचनं प्राप्यते ।

अत्र स पृच्छ्यते यद् द्वादशे पृष्ठे "एवञ्च द्वितीयस्यां पर्वतिथावष्टम्यादावौदयिकीत्वं नियम्यते" इति प्राक् स्वीकृत्य पुनरत्र पृष्ठे "नास्माकं पक्षेऽयं वाक्यार्थो यो मध्यस्थेनोल्लिखितः किन्तु पर्वतिथित्वनियमनरूपः" इत्येवमौदयिकीत्वनियमनन्निराकुर्वतस्तस्य पूर्वापरवचसोर्यो विरोधो विभाति तत्तदीयाप्रसिद्धोत्पथचलनाऽपि कल्पना कथं समादधाति ?

"वृद्धौ क्षये वा कस्याश्चित्तिथेर्दृष्टायाम्" इत्यत्र सन्निहितं क्षयपदमुपेक्ष्य व्यवहितस्य वृद्धिपदस्य समानलिङ्गतया "दृष्टायाम्" इति यन्निर्दिष्टं तत् कस्य भाषानियमस्यानुरोधेन, को वा चमत्कारश्चिकीर्षितस्तादृशेन निर्देशेन ? "पञ्चाङ्गे" इत्यारभ्य "दृष्टायाम्" इत्यन्तस्य कान्वयः ? तदर्थस्य "पर्वतिथिरेकैव भवति" इत्यर्थेन, तत्सहितेन "इति मध्यस्थेनाक्तम्" इत्यर्थेन वा सह कीदृशो हेतुहेतुमद्भावः !

"आराधनस्यैकैव पर्वतिथिरपेक्षिता सा पूर्वा परा वा "इत्यत्र" सा पूर्वा परा वा" इति भागेन कीदृशः सन्देहोऽभिलपितुमभिलषितः ? आराधनापेक्षिततिथिधर्मिकपूर्वात्वपरात्वोभयप्रकारकः, उत पूर्वापरा-धर्मिकतादृशतिथित्वप्रकारकः ? तत्र प्रथमो न सङ्गतः, तादृशतिथौ पूर्व-सूर्योदयसम्बद्धात्वरूपपूर्वात्वस्योत्तरसूर्योदयसम्बद्धात्वरूपपरात्वस्य टिप्प-णतो निश्चितत्वात्, वृद्धायामपर्वतिथौ परमतेऽपि तयोस्समानाश्रयतया परस्परपरिहारेण स्थितिनियमाभावाच्च। द्वितीयोऽप्ययुक्त एव वृद्धायां तिथौ पूर्वात्वपरात्वयोर्विद्यमानतया तदाश्रययोर्भेदाभावात्, संशयत्व-स्यैकधर्मिकविरुद्धकोटिद्वयप्रकारकत्व, विरुद्धकोटिद्वयधर्मिकैकप्रकारकत्व, विभिन्नद्वयधर्मिकोभयावृत्तिधर्मप्रकारकत्व, द्वयावृत्तिधर्मविशेष्यकभिन्न-द्वयप्रकारकत्वान्यतमनियतत्वस्य "स्थाणुर्नवा" अत्र स्थाणुत्वं तदभावो वा" "देहो वा आत्मवान् देहभिन्नो वा" "देहो वा ज्ञानं देहभिन्ने वा" इति सन्देहेषु दर्शनात्, अत्र च तादृशान्यतमाभावेन संशयत्वासम्भवात्।

न च "वृद्धिं गता तिथिः पूर्वदिने पर्वतिथिः परदिने वा" इति सन्देहो विवक्षितः सच नानुपपन्नः। एकस्यास्तिथेरेकस्मिन्नेव दिने पर्वतिथित्वस्य सम्मतत्वात्, वृद्धायाञ्च दिनद्वये औदयिकीत्वसहितपूर्णिमा-त्वादेः पर्वतिथित्वप्रापकस्य सत्त्वादिति वाच्यम्, दिनद्वये औदयिक्यां पूर्णिमादौ पर्वतिथित्वस्य सुनिश्चेयत्वात्, तस्य पूर्णिमात्वाद्यन्यतमवत्त्व-स्यौदयिकीत्वसहिततादृशान्यतमवत्त्वस्य वा नियतत्वात्। नचैवम् "एका तिथिरेकत्रैव दिने पर्व-तिथिः" इति सर्वसम्मतं कथं सङ्गच्छेतेति शङ्क्यम्, तन्मतस्यैवासिद्धत्वात्, किन्तु दिनद्वये भवन्ती अपि पर्व-तिथिरेकत्रेव दिने आराध्या' इति मतस्यैव सर्वानुमतस्य सत्त्वात्।

किञ्च पर्वतिथेः परमार्थतो वृद्धिर्न भवतीति श्रीसागरानन्दसूरिमत-समर्थने प्रवृत्तस्य पताकाकृतो निर्दिष्टे ग्रन्थे "सत्यपि तिथेर्दिनद्वये-ऽप्यौदयिकीत्वे" इति कथनमपि कथं सङ्गच्छते ? टिप्पणानुसारेणेद-

मुक्तन्नतु सिद्धान्तानुसारेणेत्युच्यमानमपि युज्यमानं न भवति "वृद्धौ कार्या तथोत्तरा" इति वचसो मध्यस्थकथितामौदयिकीत्वनियामकतामपाकृत्य पर्वतिथित्वनियामकतास्वीकारस्य पूर्णिमादिरादिमदिने पर्वतिथिर्न भवतीत्येतस्मिन्नेव सिद्धान्ते पर्यवसानात्, नतु पर्वतिथिः पूर्वदिने औदयिकी न भवतीत्यस्मिन्, पर्वतिथित्वनियमनस्यौदयिकीत्वनियमननान्तरीयकतया पूर्णिमादेः प्रथमदिने औदयिकीत्वाभावव्यवस्थापने पर्यवसानं सूपपन्नमेवेति वचनमप्यनुचितमेव, तथा सत्यौदयिकीत्वनियामकताखण्डनस्यायुक्तत्वप्रसङ्गात् ।

किञ्चायमपि प्रश्नस्तदीयमुत्तरमपेक्षते यत् कचित् "द्वितीयस्यां पर्वतिथावष्टम्यादावौदयिकीत्वं नियम्यते" कचित् "नास्माकं पक्षेऽयं वाक्यार्थः किन्तु पर्वतिथित्वनियमनरूपः,कचिच्च "परस्याः पक्षप्राप्ताया नियमनम्" पुनश्च पञ्चदशे पृष्ठे "औदयिकीसंज्ञाविधानात्" इति वदतस्तस्य किम् औदयिकीत्वे, पर्वतिथित्वे, पर्वतिथौ औदयिकीसंज्ञायां च विशेषाभावःसम्मतः ? यद्येवम् तर्हि तेषाम् पदार्थानां विशेषं वास्तविकं विजानतां विदुषां वर्गतो बहिर्भूय कश्चित् पदार्थान्यथाविदां सङ्घः शरणतया गवेषणीयः ।

"वृद्धौ कार्या तथोत्तरा" इति वचनस्यौदयिकीत्वनियामकतान्निषिध्य पर्वतिथित्वनियामकतां सिद्धान्तयतः पताकाकृतः शिरस्येकोऽयमपरः दुस्सहोऽनिष्टदण्डो निपतति तं स कथं प्रतिकरोतीत्येतदपि तेन चिन्तनीयम् ।

तथा हि यदि "वृद्धौ कार्या" इति वचनं न नियामकमौदयिकीत्वस्य किन्तु पर्वतिथित्वस्य, तदैतस्य वचेन वृद्धिप्राप्तपर्वतिथेः प्रथमदिने पर्वतिथित्वमेव निवर्त्स्यति न पुनरौदयिकीत्वम् । एवञ्च वृद्धायाः पूर्णिमादेः पूर्वदिनेऽप्यौदयिकीत्वस्याक्षुण्णतया तद्दिने तत्पूर्वस्याश्चतुर्दश्यादेरौदयिकीत्वकल्पनं कथं संगच्छेत ? एकत्र दिने द्वयोस्तिथ्योः सूर्योदयस्पर्शित्वलक्षणस्यौदयिकीत्वस्य कस्यापि विशेषतः पताकाकारस्यापि

स्वीकृतत्वाभावात् । अन्यथा पूर्णिमादेः क्षयस्थले टिप्पणानुसारेणौदयिक-चतुर्दशीके दिने पूर्णिमाया औदयिकीत्वाय पूर्वस्यास्तदभावस्वीकारस्य तत्कर्तृकस्यासङ्गत्यापत्तेः । पर्वतिथित्वमौदयिकीत्वमादायैव निवर्तते इति तु वक्तुमयुक्तम्, पर्वतिथित्वस्यौदयिकीत्वव्यापकत्वाभावात् । पूर्णिमात्वाद्यन्यतमविशिष्टौदयिकीत्वं स्वव्याप्यमादाय निवर्तते इत्यप्यशोभनं वचनम्, तस्य पर्वतिथित्वव्याप्यत्वे तद्बलेन वृद्धायां तिथौ द्वयोरेव दिनयोः पर्वतिथित्वस्य नियतप्राप्त्या पाक्षिकप्राप्तिकर्तृताविकलस्य तस्य नियमविधिविषयत्वासम्भवात् । तथाभूतस्यापि तस्य तत्स्वीकार-सम्भवे मध्यस्थोक्तस्यौदयिकीत्वे तत्सम्भवस्य निराकार्यताराहित्यापत्तेः ।

त्रयोदशे पृष्ठे पर्वानन्तरपर्वतिथिविचारं प्रतिज्ञाय पताकाकृता लिखितं यत् "पूर्णिमाऽमावास्यादिषु पर्वानन्तरपर्वतिथिषु टिप्पणानुसारेण क्षीणासु वृद्धासु वा तत्पूर्वस्याश्चतुर्दश्या अपि पर्वतिथित्वेन तस्याः क्षयः वृद्धिर्वा न भवितुमर्हति । एकस्मिन् दिने औदयिकी तिथिरेकैव भवति, एवञ्च पूर्णिमाया अमावास्याया वा टिप्पणे क्षये दृष्टे तस्याः क्षयासम्भवेन "क्षये पूर्वा तिथिःकार्या" इत्यनेनौदयिकीत्वे प्रसाधिते तत्पूर्वस्याश्चतुर्दश्या अपि पर्वतिथित्वेनौदयिकीत्वावश्यकतया तत्पूर्वस्यास्त्रयोदश्या एव क्षयं कृत्वा तस्मिन्दिने औदयिकीत्वं सम्पाद्याराधनं कार्यम्" इति ।

अत्र पर्वतिथेः क्षयो वृद्धिर्वा न भवति इति ब्रुवाणः पताकाकारः प्रष्टुमभिलष्यते यदस्य तस्य वचसः किम्परता ?

यस्यास्तिथेः पर्वतिथित्वं जैनागमेषु गदितन्तस्याः सूर्योदयस्पर्शराहित्यन्न भवतीति, अथवा यस्याः पर्वतिथेः सूर्योदयस्पर्शः पञ्चाङ्गेन न निर्दिश्यते तस्या आराधनालोपो न शास्त्रसम्मतः, किन्तु तत्तिथिशालिन्यहनि तदाराधनैव शास्त्रसम्मता, एवं यस्यास्तिथेः पर्वतिथिता जैनशास्त्रानुशिष्टा तस्यास्सूर्योदयद्वयेन संस्पर्शो न भवति ? अथवा यस्याः पर्वतिथेः सूर्योदयस्पर्शो दिनद्वये पञ्चाङ्गेन दर्शितस्तस्याः दिनद्वये पूर्वदिने वाऽऽराधनं न शास्त्रसम्मतं किन्तूत्तरस्मिन्नेव दिने ?

तत्र "पर्वतिथेः क्षयो न भवति, पर्वतिथेर्वृद्धिर्न भवति" इतिवाक्यद्वयेन प्रतिपिपादयिषिततया विकल्पितयोः प्रथमौ न सङ्गतौ, तादृशार्थकवचसो जैनागमेऽप्राप्यमाणत्वात् ।

नच 'क्षये पूर्वा" इत्यादिवचनमेव टिप्पणानुसारेण क्षीणामपि पर्वतिथिमौदयिकीम्, वृद्धामपि द्वितीयस्मिन्नेव दिने औदयिकीं बोधयत् कथितार्थयोः प्रमाणमिति वाच्यम्, तस्य वचसः पर्वतिथीनां क्षयवृद्धयोरुपजीवकतया तासान्तयोरभावबोधने उपजीव्यविरोधापत्तेः । नच वास्तविक्यौ क्षयवृद्धी नोपजीवति तत्, किन्तु टिप्पणतस्तयोरवगतिमेव, अतस्ते निपीडयतोऽपि तस्य तस्या अनपहारितया नोक्तकलङ्ककालिमेति कथनीयम्, विषयापहारेण परिणामतस्तस्या एवापहारात् । नच विषयापहारेण न तस्या अपहारः किन्तु तदीययथार्थताया एव, सा च तदुपजीव्येति न प्रदर्शितो दोष इत्युदीरणीयम्, वक्ष्यमाणदूषणप्रसङ्गात् । तथाहि टिप्पणं पर्वतिथीनां प्रवृत्तिनिवृत्तिविषयेऽप्रमाणन्तदैव स्याद् यदि तदधिकृत्य कृतं गणितं विगुणं स्यात् । एवञ्च टिप्पणप्रणेतुर्यदि गणितस्याशुद्धत्वं मन्यते तदा तस्य पर्वतिथीनां क्षयवृद्धिविषय एवाशुद्धत्वं नान्यत्रेति वक्तुमशक्यतया तिथ्यन्तरविषयेऽप्यशुद्धत्वशङ्का स्यादेव । तथाच या पर्वतिथिः यत्र दिने क्षीणतया वा वृद्धतयाऽवृद्धतया वा टिप्पणेन निर्दिष्टा सा तत्रैव दिने तथैव प्रवृत्ता इत्यत्रापि विश्वासाभावः प्रसज्ज्येत, सति चैवं तिथिनिर्णायकस्य साधनान्तरस्य सम्प्रत्यभावात् श्रीजैनसङ्घः तिथ्यादेः प्रामाणिकं परिचयमनासादयन् तिथ्याराधनेऽसमर्थो भवन् बलाद् विराधनैनसा दष्टो दुर्गतिं व्रजेत्, पाश्चात्यसभ्यताऽभिभूतधर्मभावनश्च वर्गस्तिथिनिर्णायकनिराकरणेन श्यिाराधनभारहर्त्तारं पताकाकर्त्तारं सोत्साहमभिनन्देत् ।

न च 'क्षये पूर्वा" इत्यादिबलवत्तरवचोबलेन पर्वतिथीनां क्षयवृद्धिमात्र एव टिप्पणस्याप्रामाण्यं कल्पनीयन्नान्यत्रेति शक्यवचनम्, एकदेशेऽप्रामाण्येऽभ्युपगते तद्दृष्टान्तेन देशान्तरेष्वपि तदनुमानस्य निष्कण्टकं प्रसरात्, अन्यथा दृष्टार्थकागमभागदृष्टान्तेनादृष्टार्थकागमभागेषु प्रामा-

ण्यावधारणस्य दुर्घटतया निखिलायाः धर्माधर्मव्यवस्थाया एव विलोपप्रसङ्गात् ।

किञ्च तिथीनां प्रवृत्तिनिवृत्त्यादिरूपे गणितशास्त्रासाधारणविषये शास्त्रान्तरं क्रमेतापि कथमित्यपि चिन्तनीयमेव चतुरेण पताकाकारेण ।

न द्वितीयौ, तयोस्सर्वसम्मतयोस्स्वीकारेण पताकासङ्कयतो निजनियोक्तुः प्रियपूरणे साफल्यासम्भवात् ।

किञ्चेदमवश्यमुत्तरणीयं पताकाकृता यत् पञ्चाङ्गे पर्वतिथेः क्षये प्राप्ते क्षयदिने तस्या आराधनोपपत्तये तस्यास्तद्दिने "इत्यादिवचनबलेन स्यान्नाम औदयिकीत्वम्, परन्तद्दिने टिप्पणेनौदयिकीभावेन भाषितायास्तिथेरनौदयिकीत्वलक्षणः क्षयः किमर्थं कल्प्यते? इति यदि स समादध्यात्, न किञ्चिदर्थं तथा कल्प्यते, किन्तु "एकस्मिन् दिने एकैव तिथिरौदयिकी" इति नियमानुरोधेन तदा तत्रैव युक्तं स्यात् टिप्पणानुसारेण सप्तम्यादिमति सूर्योदयकाले "क्षये पूर्वा" इत्यादिशास्त्रेणाष्टम्यादिसम्बन्धस्थापनायास्तादृशनियमाभावबोधने पर्यवसानकल्पनायाः सम्भवात् । न च तादृशनियमाभावबोधने ज्यौतिषशास्त्रस्य विरोधः स्यादिति शक्यते वक्तुम्, प्रोक्तस्य शास्त्रवचसो ज्यौतिषाद् भयाभावात्, अन्यथा ज्यौतिषासादितशौर्येण टिप्पणेन प्रवेश्यमानं सप्तम्यादेरष्टम्यादित्तयदिने सूर्योदयकालेऽवस्थानमपि तन्नापनयेत् किन्तु सिद्धान्ते वक्ष्यमाणमार्गेण तथाऽऽवरेद् यथा टिप्पणेन सह तस्य मैत्री ताटस्थ्यं वा निर्विघ्नन्निर्वहेत् ।

एवमेव टिप्पणेन पर्वतिथेर्वृद्धिनिर्देशे तस्या उत्तरदिन एवाराधनाव्यवस्थायै तस्याः "वृद्धौ कार्या" इत्यादिवचनबलेन पूर्वदिनेऽनौदयिकीत्वं मन्यताम्, किन्तु तत्पूर्वस्यास्तत्पूर्वतराया वा अपर्वतिथेर्दिनद्वये औदयिकीत्वरूपा वृद्धिः कुतो हेतोः कल्प्यते-एतदपि तेनोत्तरणीयतामर्हति ।

यदि स प्रतिब्रुवीत यत् "वृद्धौ कार्या" इत्यादिशास्त्रेण टिप्पणतो वृद्धायाः पर्वतिथेः पूर्वदिनेऽनौदयिकीत्वव्यवस्थितौ तद्दिने सूर्योदयकालस्य तिथिसाहित्यसम्पादनाय तथा कल्प्यते, अन्यथा "सर्वः सृष्टिमान् कालस्ति-

थिमान्" इति नियमो भज्येत तदा तदत्यसुन्दरमेव। टिप्पणानुसारेण पूर्वदिनेऽप्यौदयिक्याः पर्वतिथेरुक्तवचसां द्वितीयदिन एवौदयिकीत्वसम्पादनस्य तादृशनियमाभावे तात्पर्यकल्पनाशाः सम्भवात् तन्नियमोपजीव्यस्य ज्यौतिषस्यानुरोधेन तथा कल्पना न सम्भवतीति विभाव्यते चेत्तदा टिप्पणोपजीव्यस्य ज्यौतिषस्यानुरोधेन टिप्पणबोधितं पर्वतिथेः प्रथमदिनेऽपि सूर्योदयस्पर्शं तत्पूर्वतिथेस्तद्दिने सूर्योदयासम्बन्धञ्च कथं तद्वचोऽन्यथा कुर्यात्, अत एतस्यापि वचसस्सिद्धान्तेऽभिधास्यमान एवाभिसन्धिः श्रद्धातव्यः।

चतुर्दशे पृष्ठे पर्वतिथेः टिप्पणेन क्षये निर्दिष्टे तस्याः क्षयो न मान्यः किन्तु तत्पूर्वस्याः, पर्वानन्तरपर्वतिथेश्च क्षये तेन निर्दिष्टे तस्यास्तत्पूर्वस्याः वा क्षयो न श्रद्धेयः किन्तु तत्पूर्वतराया अपर्वतिथेः, एवं पर्वतिथेश्च क्षये तेन निर्दिष्टे तस्यास्तत्पूर्वस्याः वा क्षयो न श्रद्धेयः किन्तु तत्पूर्वतराया अपर्वतिथेः। एवं पर्वतिथेः वृद्धौ निर्दिष्टायां तस्याः वृद्धिर्न स्वीकार्या किन्तु तत्पूर्वस्याः, पर्वानन्तरपर्वतिथेश्च वृद्धौ निर्दिष्टायां तस्यास्तत्पूर्वस्या वा वृद्धिर्नाङ्गीकार्या किन्तु तत्पूर्वतराया इत्येतदात्मकृतव्यवस्थानुकूलजैनागमानुसारिप्रमाणप्रदर्शनं प्रतिज्ञाय सर्वप्रथमं श्रीविजयदेवसूरिविरचितत्वेनोच्यमानस्य मतपत्रकस्य तिथिहानिवृद्धिविषयकः कियान् ग्रन्थभागः उपन्यस्तः पताकाकृता- स यथा—

"ननु पूर्णिमा चतुर्दश्यां सङ्क्रामिता तदा भवद्भिर्द्वे चतुर्दश्यौ कथं न क्रियेते तृतीयस्थानवर्तिनी त्रयोदशी कथं वर्द्धिता? इति त्वं पृच्छसि शृणु तत्रोत्तरम्, जैनटिप्पणके तावत् पर्वतिथीनां वृद्धिरेव न भवति ततः परमार्थतस्त्रयोदश्येव वर्धिता" इति तत्रैवापरत्र च "तस्मात् त्यज कदाग्रहम्, कुरु पूर्णिमाऽभिवृद्धौ द्वे एव त्रयोदश्यौ" इति, तत्रैवान्यत्र च यथावदागमानुसारेण पूर्वाचार्यपरम्परया च प्रवर्तितव्यम्। परं कदाग्रहं कृत्वा कुमार्गप्रवर्तनं न कार्यम्। उत्सूत्रप्ररूपणेनानन्तसंसारवृद्धेः। तस्मात् सिद्धमेतत्-पूर्णिमाभिवृद्धौ त्रयोदश्यभिवर्धनमिति"।

**अत्रेदमुच्यते** यत् क्रोडीकृतोक्तवाक्यजातकं मतपत्रकं न सन्दिग्धप्रामाण्यकमात्रं किन्तु निर्बाधावधार्यप्रामाण्यव्यतिरेककम् । कथमिति चेत्, श्रूयताम् । उक्तमतपत्रकादन्यत्र क्वापि प्रकृतार्थस्य स्पष्टमस्पष्टं वाऽनिर्देशेन संवादाभावात् । न हि नूतनः कोऽपि निबन्धो विवादास्पदे विषये पूर्वप्रामाणिकशास्त्रसंवादं विना प्रमाणतया मान्यो भवति । मतपत्रकस्योद्धृते वाक्ये पूर्वपक्षयितुः स्ववक्तव्ये विशेषादरो दृश्यते, तेन स्पष्टमवगम्यते प्रकृतस्य पर्वतिथिक्षयवृद्धिसम्बन्धिनो विषयस्य महाविवादास्पदता, अतस्तादृशे विषये करिष्यमाणस्य निर्णयस्य प्रामाणिकप्रमाणान्तरसंवाददर्शनमावश्यकमस्ति परं मतपत्रके तस्य सर्वथाऽभाव एव विद्यते । पूर्णिमावृद्धौ त्रयोदशीवृद्धेः मान्यतायाः मूले पृष्टे "जैनटिप्पणके तावत् पर्वतिथीनां वृद्धिरेव न भवति ततः" इत्युक्तम् । को नाम जिज्ञासते जैनटिप्पणके पर्वतिथीनां वृद्धिर्भवति न वेति ? प्रश्नस्त्वयमस्ति यत् जैनटिप्पणकन्तु अद्यत्वे नास्ति, यदस्तीतरट्टिप्पणकं तत्र पर्वतिथीनां वृद्धिनिर्देशो विद्यते तथा च तदद्यत्वे जैनैस्तिथ्यादिनिर्णयाय प्रमाणत्वेन ग्राह्यन्न वा ? यदि न ग्राह्यन्तदाऽन्यस्य तिथ्यादिनिर्णायकस्याभावाद् धर्मलोपः प्रसज्यते । ग्राह्यञ्चेत्तदा सर्वांश एव प्रमाणत्वेन ग्राह्यं स्यान्नत्वंशविशेषे । अन्यथा अंशविशेषस्याप्रमाणत्वे तद्दृष्टान्तेनेतरसर्वांशेऽप्यप्रामाण्यमापतेत् । अथवाऽपरांशन्यायेनाप्रमाणत्वेनेष्यमाणस्यापि तद् व्यतिगच्छेत् ।

किञ्च किमत्र मानं ? यद् यदि जैनटिप्पणकमद्यत्वे मृतं नाभविष्यत् तदा तत्रैव दिने पर्वतिथिसत्तां निरदेक्ष्यद् यत्र प्रकृतं टिप्पणं विनिर्दिशति । यद्यस्ति, किन्तत् ? यदि नास्ति, कुतस्तदा तत्रापि नैतस्याप्रामाण्यसंशयग्रासः ?

एवञ्चाभिहिताभिप्रायेणोत्थितस्य "पूर्णिमाक्षये त्रयोदशी कथं वर्द्धिता" इति प्रश्नस्य न किञ्चित् सामाधानं मतपत्रके कृतमस्ति ।

किञ्च "द्वे चतुर्दश्यौ कथं न क्रियेते" इति प्रश्नस्य कथञ्चिदुच्येतापि "जैनटिप्पणके तावत् पर्वतिथीनां वृद्धिर्न भवति" इत्युत्तरम्, परं "त्रयोदशी कथं वर्धिता" इति प्रश्नस्य तु कथञ्चिदपि तदुत्तरतया वाच्यं न भवति यस्योत्तरन्त्वेतत् स्याद् यादृश्यां स्थितौ जैनेतरटिप्पणं पूर्णिमावृद्धिं निर्दिशति तादृश्यां त्रयोदश्येव जैनटिप्पणेन वृद्धिमत्तया निर्दिश्यते स्मेति। परमिदन्तदैव भवेद् यदीदं प्रमाणयितुं शक्येत। अत आगमसंवादाप्रदर्शनेन नवस्य तस्याप्रामाण्यमकम्पनीयम्।

पूर्णिमाऽभिवृद्धौ प्रथमदिने चतुर्दशीसङ्क्रमणं कार्यं त्रयोदश्याश्च वर्धनं विधेयम् इत्यादेः स्वाभिप्रेतस्य समर्थनाय काचिद् युक्तिर्नोपन्यस्ता। तत्र जैनटिप्पणकं समर्थकतया नोपन्यासार्हं सुचिरपूर्वसमुच्छिन्नतया तत्स्वरूपस्य निरूपयितुमशक्यत्वादित्युक्तम्। "यथावदागमानुसारेण" इति मतपत्रकवचनमपि नामग्राहमागमानुल्लेखेन वञ्चनमात्रम्। "वृद्धपरम्परया" इत्येषोऽपि तदीयः शब्दो व्यर्थप्रायो विजयदेवसूरिपूर्वं तत्समये वा तादृशपरम्परायाः सत्त्वे मानाभावात्। सत्त्वे वा तत्परपम्परा किम्मूलिका? इति प्रश्नोत्तरस्यावश्यं निर्देश्यस्योपेक्षाया अनौचित्यात्। स्वानुमितागममूलिका सा इत्यस्यापि प्रश्नकर्तृदृष्ट्याऽज्ञानसमुत्थायास्तस्या आगमगमकतौपयिकरूपप्ररूपणमन्तरेण वक्तुमनुचितत्वात्। "उत्सूत्रप्ररूपणेन" इत्युक्त्या प्रश्नकर्तृकथनस्य पूर्णिमावृद्धौ त्रयोदशीवृद्धेरनौचित्यपरस्योत्सूत्रता या सूचिता साऽपि समर्थकयुक्तेरनुपन्यासेन निष्फलीकृता। अतो निजविवक्षिते युक्तिहीनतयाऽपि मतपत्रकस्याप्रामाण्यं ध्रुवमेव।

परस्परविरुद्धोक्तिगर्भतयाऽपि तस्याप्रामाण्यमापतति। तद् यथा पूर्वं पूर्णिमावृद्धौ प्रतिपद्वृद्धिरितिविजयानन्दसूरीणां मतमुपन्यस्य निराकृतम्। तत्र जैनटिप्पणके तिथीनां वृद्धिर्न भवतीत्यस्य हेतुता शब्दतोऽर्थतो वा विवक्षिता। सा च तदभिमतायास्त्रयोदशीवृद्धेः प्रतिकूला। यदि "तिथीनाम्" इत्यस्य "पर्वतिथीनाम्" इत्यर्थस्तदा सा प्रतिपदोऽपर्वरूपायाः वृद्धिप्रति-

षेधे स्वात्मतया वञ्चिता भवति । तदनन्तरं सेनप्रश्नग्रन्थात् "अष्टम्यादि-तिथिवृद्धौ अग्रेतन्या आराधनं क्रियते,, इत्युपन्यस्य वृद्धौ सत्यां स्वल्पाप्यग्रेतनी तिथिःप्रमाणम्" इति निगमनं पूर्वोपक्रान्तविचारस्य विनिर्दिष्टम् । तत्पश्चाच्च पूर्णिमावृद्धौ त्रयोदशीवर्धनं कथमिति प्रश्नस्तदुत्तरं च "ननु पूर्णिमा चतुर्दश्यां संक्रामिता" इत्यादितः प्रथमोद्धृतग्रन्थात् कृतमस्ति । ततः परञ्च "चेदेयं तव न रोचते तदा प्रथमां पूर्णिमां परित्यज्य द्वितीयां पूर्णिमां भज" इति वाक्यं रचितं वर्तते ।

एवञ्च "जैनटिप्पणके तिथीनां वृद्धिर्न भवति" इति पूर्वप्रकाशितस्य तिथिसामान्यवृद्धिनिषेधस्य पश्चात् कथितेन पर्वतिथिमात्रवृद्धिप्रतिषेधेन सह विरोधः । तदनु सेनप्रश्नग्रन्थस्य पर्वतिथिवृद्धिनिर्देशिनः पूर्वोपन्यस्तस्य पौरस्त्येन तत्प्रतिषेधोक्तिपूर्वकत्रयोदशीवृद्धिवचसा विरोधः पुनस्तस्य "तदा प्रथमां पूर्णिमां परित्यज्य द्वितीयां पूर्णिमां भज" इत्यग्रेतनेन विरोधः ।

"चेदेवं तव न रोचते" इत्युक्त्या निजोक्तस्य दौर्बल्यं निजस्यापि प्रतिभातीति सूच्यते । उचितमप्येतत् । अन्यथा को नाम पामरप्रधानादन्यो निष्प्रमाणं निर्युक्तिकं चोक्तं परश्रद्धेयतां विश्वसेत् । नैतस्य परपक्षाभ्युपगमेन समाधानदानरूपता शङ्कनीया । "प्रथमपूर्णिमापरित्यागपूर्वकद्वितीयपूर्णिमाग्रहणोपदेशे त्रयोदशी कथं वर्धिता" इति प्रश्नस्य समाधानताया अभावात्, धार्मिकविचारे परपक्षाभ्युपगतेः कस्मा अपि प्रयोजनाय अवाञ्छनीयत्वाच्च ।

स्वाभ्युपगमविरुद्धस्य वचनादपि मतपत्रकं प्रमाणतां परित्यजति । कथन्तत्र स्वाभ्युपगमविरोध इति चेत् ? प्रथमपूर्णिमापरित्यागपूर्वकोत्तरपूर्णिमापरिग्रहणोपदेशात् प्रतीयमानेन "द्वितीयपूर्णिमाऽऽश्रयणे पूर्णिमावृद्धिः स्वीक्रियमाणाऽपि न हानये" इत्यनेन "पूर्णिमावृद्धौ त्रयोदश्या एव वृद्धिः" इति स्वाभ्युपगमविरोधस्य निर्बाधप्रत्ययात् ।

अन्तर्निविष्टशापतयाऽप्येतस्य प्रामाण्यं परिहीयते। तथाहि उक्तो विचारो यदि वादिना सह स्यात्तदा तन्मतनिराकरणपूर्वकस्वमतसमर्थनमेव न्याय्यन्नान्यत्। अन्यथा तेनापि कदाग्रहित्वकथनपूर्वकाभिशापदानस्य सम्भवेनान्यादृशे कलहे पर्यवसानात्। यदि विद्यार्थिना, तदा तस्यापि प्रथमं सविस्तरवैशद्यं युक्तिप्रमाणोपन्यासद्वारा विवक्षितस्य समर्थनेन तदीयसन्देहसमुन्मूलनमेव न्याय्यन्नतु तथाऽकृत्वैव कोपकरणम्। नचात्र प्रतिपादनीयेऽर्थे पूर्णिमावृद्धौ त्रयोदशीवृद्धिकर्तव्यतौचित्यरूपे युक्त्यादीनामुपन्यास इति स्पष्टमावेदितमेव।

अविज्ञातकर्तृकत्वमपि प्रकृतस्य मतपत्रकस्य प्रमाणत्वप्रतिकूलमेव। तथाहि सम्प्रदायान्तरेऽविज्ञातकर्तृकस्य वेदस्य प्रामाण्येऽपि जैनसम्प्रदाये नाविज्ञातकर्तृकस्य प्रामाण्यं सम्मतम्। आगमस्य सर्वज्ञतीर्थङ्करोपज्ञत्वादेव प्रमाणत्वेन स्वीकारात। अतस्तदतिरिक्तस्य शास्त्रस्य तन्मूलकत्व एव प्रामाण्यं स्वीकर्तुमर्हमार्हतैः। परैरपि तादृशस्य तथैव तत्स्वीकारात्। एवञ्च मूलागमभिन्नस्य स्पष्टमागममूलकत्वपरिज्ञान एव तत्प्रामाण्यस्वीकरणस्य युक्ततया पूर्णिमावृद्धौ त्रयोदश्यादिवृद्धिमान्यतासमर्थनार्थमनुद्धृतागमवचने मतपत्रके प्रामाण्याङ्गीकरणाय तत्कर्तुरन्वेषणमावश्यकं येनाप्राप्तसमर्थकागमवचनस्यापि तस्य "क्षये पूर्वा" इत्यादिवाचकमुख्यवचनस्येव कर्तृमहिम्ना प्रामाण्यं स्वीकर्तुं शक्येत। न च "श्रीविजयदेवीयानाम्" इत्युल्लेखेन तत्कर्तुर्विज्ञानं सुलभमेवेतिवाच्यम्, तदुल्लेखस्य सम्पादककृतत्वसम्भवेन संशयकत्वात्। न च सम्पादकोल्लेखादपि अनेकग्रन्थानां पुरुषविशेषकर्तृकत्वं स्वीक्रियत एव लोकेन, तथा च तत एवास्यापि श्रीविजयदेवसूरिकृतत्वमास्थेयमिति शङ्कनीयं प्रमाणान्तरे सत्येव तदुल्लेखस्यान्यत्रापि समादरात्। अन्यथा कश्चिन्नूतनं ग्रन्थं कृत्वा तत्र च कर्तृतया कस्यचिन्मान्यस्य पुरातनस्य पुंसो नामनिर्देशेन तन्मुद्रणेऽपि तस्य प्रामाण्यं प्रसज्येत।

द्विविधाश्च प्राचीनग्रन्थकर्त्तारो दृश्यन्ते एके निजनाम्नो निर्देशकाः अपरे च तदनिर्देशकाः। तत्र प्रथमकोट्यन्तर्गताः निजग्रन्थेऽनेकत्र नाम्ना प्रकारान्तरेण वाऽऽत्मनो निर्देशं कुर्वन्ति यथा नैषधकारादयः। न चैवमस्त्यस्मिन् मतपत्रकेऽतस्तत्कर्त्ता नामानिर्देशककोटावेव गणनीयः। एवञ्च स्वरूपेण कर्तृविशेषप्रभवत्वेन चाप्रसिद्धस्य तस्य मतपत्रकस्य मुखपृष्ठे प्राप्यमाणो नामनिर्देशः सम्पादककृत एव मान्यः। स च प्रमाणान्तरसहकारमन्तराऽप्रमाणमेव।

इत्थञ्च पत्रचतुष्टयात्मकत्वमपि तस्याप्रामाण्यग्रहणेऽनुकूलमेव। अन्यथा विस्तृतग्रन्थान्तरघटकत्वे तस्य पूर्वापरपर्यालोचनेन कदाचित् कथितदोषनिरासम्भवेन तादृशस्यापि तस्य प्रामाण्यसम्भवात्। अतोऽविज्ञातकर्तृकत्वादिविशिष्टपत्रचतुष्टयमात्रकायस्याविभ्रान्तेन लोकेन प्रमाणतया मतस्यैकस्यापि धर्मग्रन्थस्य लोकेऽदर्शनादेतस्यापि तथाभाव एव न्याय्यः।

एवञ्च चतुर्दशत्रयोविंशपृष्ठयोः पाताकाकारस्य मतपत्रके प्रामाण्यसाधनस्य मध्यस्थोद्घोपिततदप्रामाण्यनिराकरणस्य च प्रयासो नियोजकनिदेशपालनमात्रमवगन्तव्यम्।

किञ्चैतदप्यवश्यं ध्येयं यत् कस्मिँश्चिद् विषयविशेषे विवाद उत्थिते वादिप्रतिवादिभ्यां प्रमाणत्वेनाभ्युपगत एव शास्त्रादिरन्यतरपक्षनिर्णयाय मध्यस्थेनोपादेयो भवितुमर्हति। मतपत्रकस्य चास्य प्रामाण्यमेकतरपक्षवादिनो जैनाचार्यश्रीरामचन्द्रसूरेर्न सम्मतम्।

चतुर्दशपञ्चदशपृष्ठयोः "तथा हि—महोपाध्यायश्रीधर्मसागरप्रणीततत्त्वतरङ्गिण्याम्—"नन्वौदयिकतिथिस्वीकारान्यतिथितिरस्कारप्रवणयोरावयोः कथं त्रयोदश्या अपि चतुर्दशीत्वेन स्वीकारो युक्तः," इत्याशङ्क्य "तत्र त्रयोदशीति व्यपदेशस्याप्यसम्भवात्, किन्तु प्रायश्चित्तादिविधौ चतुर्दश्येवेति व्यपदिश्यमानत्वात्" इति समाहितम्। एतेनेदं सिद्धयति-लौकिकटिप्पणे त्रयोदशीत्वेन श्रुताया अपि "क्षये

पूर्वा तिथिः कार्या" इत्युमास्वातिप्रघोषत्वेन प्रसिद्धेन शास्त्रेण पर्वतिथेरौदयिकीसंज्ञाविधानात् तस्याः क्षयाभावात् फलतोऽपर्वतिथेरेव क्षयसिद्धेः तत्र चतुर्दश्येव शास्त्रतः प्राप्नोति सैव व्यपदेशमर्हति। व्यपदिश्यते च तथा प्रायश्चित्तादौ न तु त्रयोदशीति व्यपदेशः क्रियत इति" इति पताकाकृतो वाक्यमुपलभ्यते।

अत्र स प्रष्टव्यो भवति यदेतेन तत्त्वतरङ्गिणीवाक्येन "चतुर्दशीक्षये त्रयोदशीक्षयः कार्यः" इति तदभिलषितोऽर्थः कथं प्रकाश्यते? "तत्र त्रयोदशीति व्यपदेशस्याप्यसम्भवात्" इति भागेन सोऽर्थो बोध्यत इत्युच्यते चेत्। नैतत् सम्यक्। तद्घटकशब्दानां तादृशेऽर्थे शक्तिविरहात्। तेन भागेन तादृशार्थो न शाब्द्यते किन्त्वर्थतो गम्यत इति चेदभिधीयते। नैतदपि शोभनम्। आराधनादौ त्रयोदशीव्यपदेशानौचित्यप्रत्यायनपरस्य तस्य त्रयोदशीत्त्वप्रत्यायनपरतायाः कल्पनस्य निष्प्रमाणकत्वात्।

अयम्भावः—चतुर्दशीक्षयदिने टिप्पणानुसारेणौदयिक्यां त्रयोदश्यां न सर्वथा त्रयोदशीव्यपदेशस्यानौचित्यमसम्भवत्वं वा उक्तवाक्यभागेन विवर्णयिषितम् किन्तु आराधनादिविधावेव, "प्रायश्चित्तादिविधौ चतुर्दश्येवेति व्यपदिश्यमानत्वात्" इत्यग्रिमवाक्येनैतदर्थस्य स्पष्टं सूचनात्। "संवच्छर चउमासे पक्खे अट्ठाहियासु तिहीसु। ताउ पमाणं भणिआ, जाओ सूरो उदयमेइ॥ अह जइ कह वि न लब्भन्ति, ताओ सूरुग्गमेण जुत्ताओ। ता अवरविद्ध अवरावि हुज्ज नहु पूव्व तव्विद्धा"॥ इति गाथान्तर्गतेन "अवरावि" इति शब्देनाप्येतस्यैवार्थस्य सूचनाच्च। अत उक्ततरङ्गिणीवाक्यं केवलमेतदेव बोधयति यत्तादृशी त्रयोदशी वस्तुतस्त्रयोदशी भवन्ती अपि आराधनादिकर्मणि त्रयोदशीशब्देन न व्यपदेश्या, तादृशव्यपदेशस्य तदननुकूलत्वात्, किन्तु चतुर्दशीशब्देनैव व्यपदेश्या चतुर्दशीव्यपदेशस्य तदानुकूल्यात्। अयमर्थश्च तत्त्वतरङ्गिण्याम् उक्तगाथोत्तरमुपलभ्यमानात् "न च

प्राक् चतुर्दश्येवेत्युक्तम्, अत्र तु 'अवराविं' इत्यनेन अविशब्दादन्यसंज्ञापि गृह्यते तत्कथं न विरोध इति वाच्यम्, प्रायश्चित्तादिविधावित्युक्तत्वात्" इत्येवंविधाद् ग्रन्थात् सम्यक् परिपुष्यति । अत एतत्तत्त्वतरङ्गिणीग्रन्थात् पताकाकारप्रभृतयस्सर्वथा त्रयोदशीलोपस्य तत्त्वतरङ्गिणीकृत्सम्मतत्वं कथं प्रतियन्तीति चिन्तयन् बुधवर्गो विस्मयोदन्वति निमज्जति ।

पञ्चदशे पृष्ठे "शास्त्रेण पर्वतिथेः क्षयाभावकथनादपर्वतिथेरर्थात् क्षयप्राप्तेः चतुर्दश्याश्च पर्वतिथित्वेन तत्क्षयस्याकरणात् तत्पूर्वस्यास्त्रयोदश्या एव क्षये कृते क्षीणतिथेर्व्यपदेशः प्रयोजनाभावान्न युक्तः । अत एव तस्य व्यपदेशो न क्रियते, चतुर्दश्या एव भूमाधिकरणन्यायेन भूयसा व्यपदेशः क्रियते । तथा हि "सृष्टीरुपदधाति यथासृष्टमेवावरुन्धे" इति चयनप्रकरणे श्रूयते ।........................

तत्र सृष्टिपदेन सृष्ट्यसृष्टिसमुदायरूपसप्तदशसंख्याकमन्त्रा अभिधीयन्ते । तस्मिन् समुदाये........................................

चतुर्दशमन्त्रास्सृष्टिवाचकपदघटिताः ।............त्रयोदशमन्त्रास्तदघटिताः । तादृशोभयसमुदायस्सृष्टिशब्देनोच्यते भूम्ना बाहुल्येन। ....................एवं दिने यस्मिन् त्रयोदश्याः क्षयश्शास्त्रेणोक्तस्तस्मिन् दिने अधिकांशश्चतुर्दश्या व्याप्तस्तदव्याप्तश्चाल्पीयानंशः। तादृशोभयांशसमुदायश्चतुर्दशीपदेन व्यदिश्यते" इति पताकाकृतो ग्रन्थो ज्ञानाध्वगो भवति । अत्र स महाशयः पुनः प्रष्टव्यो जायते यत्केन तावत्तपोनिचयेनेदृशी विचित्रा प्रतिभा तेन लब्धा यद्वशात् सर्वथा विषमोऽपि दृष्टान्तो दार्ष्टान्तिके नियोज्यते, न च लज्ज्यते लेशमपि। तथा हि सृष्ट्यसृष्टिसमुदायरूपसप्तदशसंख्याकमन्त्रेषु सृष्टिवाचकपदघटितमन्त्राणां बाहुल्येन तदघटितानाञ्चाल्पत्वेन तत्समुदाये सृष्टिशब्दप्रयोगस्य भूमाधिकरणन्यायविषयता युज्यते परं पताकाकृत्समर्थनीये मते टिप्पणदृष्ट्या चतुर्दशीक्षयदिने त्रयोदश्याः सर्वथा लोपस्य स्वी-

कारेण तस्याः स्तोकमप्यसत्तया तद्दिवसीयतिथौ चतुर्दशीत्वमात्रस्यैव च सत्तया तत्र चतुर्दशीव्यपदेशस्योक्तन्यायविषयता कथं संगच्छते ?

किञ्च कीदृशमनवधानं पताकाकर्त्तुः ? यदनुपदमेव चतुर्दशीक्षयदिने "चतुर्दश्याश्च पर्वतिथित्वेन तत्क्षयस्याकरणात् तत्पूर्वस्यास्त्रयोदश्या एव क्षये कृते" इति ग्रन्थेन त्रयोदश्यास्सर्वथाऽसत्त्वमुक्त्वा पुनः पुरः पदमेव "दिने यस्मिन् त्रयोदश्याः क्षयश्शास्त्रेणोक्तस्तस्मिन् दिने अधिकांशश्चतुर्दश्या व्याप्तः तदव्याप्तश्चाल्पीयाननंशः" इति ग्रन्थेन तद्दिने त्रयोदश्याः सत्त्वमाशंसति । न च किञ्चिच्चिन्तयति यद् यदा तद्दिने सूर्योदयकालाच्चतुर्दश्या एव सत्त्वं स्वीकृतं तदा त्रयोदशी तद्वासरे कदा कथं वा वर्तिष्यते ? इति । यदि चाधीतमीमांसतया मीमांसाऽधिकरणेषु स्नेहोद्रेकवशाद् भूमाधिकरणन्यायस्यावसरदानमत्र कर्तव्यमेव प्रतिभाति तदा सिद्धान्ताध्वना सूर्योदये विद्यमानायामेव त्रयोदश्यां "क्षये पूर्वा तिथिः कार्या" इति शास्त्रबलेनाराधनार्थं चतुर्दशीभावं संस्थाप्य तत्र दिने सूर्योदयात् परमेकद्विघटिकामात्रं त्रयोदश्याःशेषे समग्रे भागे चतुर्दश्याश्च वर्तनं टिप्पणानुसारेण स्वीकृत्य भूमाधिकरणन्यायस्यावसरप्रदानेन परिपालयतां जैमिनीयन्यायानुरागः ।

षोडशे पृष्ठे "एवं च लौकिकटिप्पणेन दुर्बलेन प्राप्तमपि त्रयोदशीत्वं शास्त्रेण प्रबलेन बाध्यते, भवति हि दुर्बलेन प्रमाणेन प्रापितस्य पदार्थस्य प्रबलप्रमाणबोधितेन तेन बाधः । अङ्गीकृतश्चायं विषयो बहुत्र पूर्वमीमांसायां विरोधाधिकरणे बलाबलाधिकरणादौ च । न च दुर्बलस्यापि टिप्पणस्य प्रबलेन शास्त्रेण बाधे तस्यानर्थक्यप्रसङ्गः । एवं चानर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेन टिप्पणस्यैव प्राबल्यं कुतो न स्यादिति वाच्यम्, टिप्पणस्य तिथ्यन्तरे चारितार्थ्यात् आनर्थक्याप्रसक्तेः" इति पताकाप्रणेतुः ग्रन्थः प्राप्यते ।

अत्र स प्रच्छ्यते यद् यावत् "क्षये पूर्वा" इत्यादिशास्त्रस्य चतुर्दशीक्षयदिने त्रयोदश्याः प्रतिषेधकत्वं सन्देहदोलामेव समारूढं

तावत् कथं टिप्पणस्य, सूर्योदयस्पर्शितिथौ तत्प्राप्तत्रयोदशीत्वस्य वा तच्छास्त्रबाध्यत्वं व्यवस्थापयितुं तेन शक्यते ? । तस्यानुपदं निर्दिष्टा उक्तिस्तु तदा युज्येत यदि मानान्तरेण तच्छास्त्रस्य चतुर्दशीक्षयदिने त्रयोदशीविरहबोधकत्वे व्यवस्थिते टिप्पणविरुद्धं बोधयतः कथन्तस्य प्रामाण्यम् ? टिप्पणप्रभवे विरुद्धे बोधे विद्यमाने कथं वा तच्छास्त्रेण विपरीतो बोध उपधातुमर्हः ? इति प्रश्नः प्रसरेत् । अथवा टिप्पणप्रतिकूलप्रत्ययार्जनादेव तच्छास्त्रोपपत्तिः कर्तव्या भवेत् परमत्र तयोरेकोऽपि नास्ति । न खलु साधनगन्धोऽप्येतादृशो वर्तते येनोक्तशास्त्रस्य तथाविधबोधजनकता व्यवस्थाप्यते । नवाऽस्ति टिप्पणप्रतिकूलप्रतीत्यर्जनं विना तस्य अगतिः, सिद्धान्ते टिप्पणसम्मानसंरक्षणेन सह तदुपार्जिजयिषितबोधस्य दर्शयिष्यमाणत्वात् ।

किञ्च पर्वतिथीनां क्षयवृद्धिविषये टिप्पणस्य यद्यप्रामाण्यमुपगम्यते तदा तत्प्रयोजकस्य गणितस्याशुद्धिरवश्यं वाच्या । तथा च टिप्पणस्य प्रणिनीषितुः पर्वतिथीनामिवान्यतिथीनामपि विषये गणिताशुद्धिः सम्भाव्यत एवेति तत्प्रणीतटिप्पणस्य तिथ्यन्तरेऽपि सन्दिग्धप्रामाण्यकतया तत्रापि चारितार्थ्यस्य दुर्निर्णयत्वात् तस्यानर्थक्यप्रसङ्गेन "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इतिन्यायविषयतायाः टिप्पणे सम्भवात् "टिप्पणस्य तिथ्यन्तरे चारितार्थ्यात् आनर्थक्यप्रसक्तेः" इत्युक्त्या सूच्यमानं तस्य तन्न्यायविषयत्वमपि पताकाकृतोऽसङ्गतमेव ।

सप्तदशे पृष्ठे "अतश्च टिप्पणस्य स्वविषये सत्यपि प्रामाण्ये पारिभाषिकौदयिकीत्वविषये शास्त्रं तदनुसार्याचार्यवचनं वा प्रमाणं भवितुमर्हतीति" पताकाकृता कथितम् ।

अत्रेदं जिज्ञास्यते यत् कस्तावत् स्वविषयस्तेन टिप्पणस्य मन्यते ? यत्र तस्य प्रामाण्यं निर्बाधमुद्घुष्यते, कीदृशंच पारिभाषिकमौदयिकीत्वं तेन सम्मन्यते ? यत्र शास्त्रस्याप्रतिहता गतिरुद्गीयते । यदि तेन प्रत्युच्यते यदुक्तमेव तेन पताकायाः षोडशे पृष्ठे यत् "तत्तत्तिथ्यादीनामुदयास्तमयसम्ब-

न्धमात्रं पञ्चाङ्गेन निर्णीयते इति तस्मिन्नेव विषये तस्य प्रामाण्यम्" इति। तदा स कथं पर्वतिथीनां सूर्योदयासम्बन्धरूपे क्षये सूर्योदयद्वयसम्बन्धरूपायां वृद्धौ च टिप्पणस्याप्रामाण्यं स्थापयन्न त्रपते ? यदि तेन पुनः प्रत्युच्यते यत्तेन टिप्पणस्य पर्वतिथीनां तादृशक्षयवृद्ध्योरप्रामाण्यं नोच्यते किन्तु जैनशास्त्रैकसमधिगम्यस्य पारिभाषिकौदयिकीत्वस्य व्यतिरेके एकपर्वतिथौ दिनद्वयावच्छेदेन तस्य सत्त्वे च। तदा स पुनः पर्यनुयुज्यते यत् कुतस्तदा तेन जैनशास्त्रसम्मतं श्रीसागरानन्दसूरिसम्मतं वा पारिभाषिकमौदयिकीत्वं "क्षये पूर्वा" इत्यादिवचसा बुबोधयिषितं नोल्लिखितं निजपताकायाम् ? किं तदुल्लेखाभावस्तदीयं तत्परिचयाभावं न प्रकाशयति ? एतदपि वाच्यम् पताकाकृता यत्कस्तावत् टिप्पणस्य क्षीणपर्वतिथेः पारिभाषिकौदयिकीत्वराहित्ये वृद्धायास्तिथेश्च दिनद्वयावच्छेदेन पारिभाषिकौदयिकीत्वे प्रामाण्यं मन्यते यम्प्रत्येतादृशः प्रयासस्तस्य फलेग्रहिर्भवेत् ?

किञ्च पताकाकृता नूनमिदमप्यनुस्मर्तव्यं यत्तस्य नियोक्तुः पारिभाषिकमौदयिकीत्वन्नास्त्यभिमतं किञ्चित्, अन्यथा पारिभाषिकौदयिकीत्वस्य तदभिमतत्वे चतुर्दशीक्षयदिने चतुर्दश्याः पारिभाषिकौदयिकीत्वस्य स्वीकृतेस्त्रयोदश्याः क्षयाभावं विनापि सम्भवेन तल्लोपकरणस्यानावश्यकत्वापत्तेः। यदि कथञ्चित् पारिभाषिकमप्यौदयिकीत्वमेतादृशं निरुच्येत यत् त्रयोदश्याः क्षयाभ्युपगम एव चतुर्दश्यामुपपद्येत तदा तु सोऽमान्य एव स्यात्, शास्त्रसम्मतिं विना पारिभाषिकौदयिकीत्वस्य यथाभिलषितस्य निर्वचने नैकानर्थप्रसक्तेः।

अष्टादशे पृष्ठे "पर्वतिथेष्टिप्पणे क्षयदर्शनेऽपि न शास्त्रतोऽत्यन्तलोपोऽङ्गीक्रियते मध्यस्थेनापि। आराधनार्थं तस्यास्सप्तम्यां तेन विधानाङ्गीकारात्। अतः प्रथमतो लोपमापाद्य व्यपदिश्य वा अनन्तरं तस्याः विधानापेक्षया स्थिताया एव तस्याः औदयिकीत्वं व्यपदेशः परं विधीयते लाघवादित्याचार्यसागरानन्दसूरिमतम्"इति पदावली पताकाकृतः प्राप्यते।

**अत्रोच्यते** यत् सत्यमेतत्, न मध्यस्थेन क्षीणाया अष्टम्यादेरत्यन्तलोपः क्रियते, परं पताकाकृताऽत्यल्पं बुध्यते। यतस्तादृशतिथेरत्यन्तलोपः टिप्पणेनापि न क्रियते, किन्तु गणितागतमनौदयिकीत्वं निर्दिश्यते। यदि तेन स्वीयन्तात्पर्यमेवं वर्ण्यते यन्मध्यस्थेन तादृशाष्टम्यादेः औदयिकीत्वस्य सर्वथा लोपो न क्रियते किन्तु औदयिकसप्तम्यादावष्टम्यादिकं तादात्म्येन विधाय विबोध्य वा तस्य सत्त्वमेवाभ्युपगम्यते। तदा तस्य "प्रथमतो लोपमापाद्य व्यपदिश्य वाऽनन्तरं तस्या विधानापेक्षया" इत्यादिकथनं कथं संगच्छते? यतो न मध्यस्थेन कदाप्येवमुक्तं यत् सप्तम्यादौ क्षीणाष्टम्यादितादात्म्यम्, अष्टम्यादिक्षयदिवसीयसप्तम्यादौ आराधनार्थमष्टम्यादिरूपत्वम्, तादृशसप्तम्यादावष्टम्यादिभावेनाराधनीयत्वम्, क्षीणाष्टम्यादौ पारिभाषिकमौदयिकीत्वमाराधनोपयुक्तं वा नास्तीति। अतो यथा तत्पाल्यनिर्देशाचार्यमतेऽष्टम्यादिक्षयनिर्देशदिने वस्तुतः सूर्योदयवेलायां विद्यमानायामेवाष्टम्यादौ टिप्पणतोऽविदिता तादृशविद्यमानता "क्षये पूर्वा" इत्यादिवचसा बोध्यते तथा मध्यस्थस्थापनीयमतेऽपि अष्टम्यादिक्षयदिवसीयसप्तम्यादौ वस्तुतो विद्यमान एव आराधनार्थाष्टम्यादिभावः टिप्पणादितोऽनवबोधितो वचसा तेन बोध्यते इति कुतः पताकाकृतो मतिर्मन्दायते मध्यस्थमनीषिताश्लेषे!

**एकोनविंशे पृष्ठे** "भाद्रपदशुक्लचतुर्थ्या एव तत्पर्वतिथित्वात् तत्पञ्चम्याः पर्वानन्तरपर्वतिथित्वमभ्युपगम्य तृतीयायाः क्षयवृद्धिसम्पादनं श्रीमदाचार्यसागरानन्दसूरीणामनावश्यकमिति मध्यस्थो ब्रवीति। तदिदमसङ्गतम्। हीरप्रश्ने पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः कस्यां तिथौ क्रियते इति प्रश्नमुत्थाप्य यदा पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते इति सामान्यत एव पञ्चमीनिर्देशात् तत्र भाद्रपदशुक्लपञ्चम्या व्यावृत्त्यदर्शनात्, "बीया पञ्चमी अट्ठमी एगारसी चउदसी पणतिहिओ। एआओ सुयतिहीओ गोयमगणहारिणा

भणिया" इति गाथायां सामान्यत एव पञ्चमीग्रहणात् गीतार्थाचीर्ण-त्वेन परम्पराव्यवहारेण च पञ्चम्याःसामान्यपर्वतिथित्वमस्त्येव। कालकाचार्येण प्रधानपर्वतिथित्वस्यैव परिवर्तनात्। पर्वतिथित्वञ्च नियताराधनाधिकरणत्वम्। तच्चाष्टमीचतुर्थ्योरिवान्यासामपि तिथीनामस्त्येव बह्वीनाम्। जैनागमेषु तथा दर्शनात्" इत्यादिग्रन्थेन भाद्रपदशुक्लपञ्चम्यां श्रीकालकाचार्यानन्तरमपि पर्वानन्तरपर्वतिथित्वं व्यवस्थाप्य तस्याः पञ्चाङ्गे क्षयनिर्देशे तस्या औदयिकीत्वसम्पादनानुरोधेन प्रधानतमाया अपि भाद्रपदशुक्लचतुर्थ्याः पञ्चाङ्गनिर्दिष्टे दिनेऽनौदयिकीत्वस्वीकरण-मुचितमिति प्रतिपादयता पताकाकृता मध्यस्थवक्तव्यमधरीकर्तुं चेष्टितम्।

पर विचारः शास्त्रं वा तदीयप्रतिपादनं न प्रमाणयति प्रत्युत निर्दयं प्रतिक्षिपति। तथा हि "बीया पञ्चमी" इत्याद्युद्गीतगाथानुसारेण तस्याः शुभतिथित्वमेव शास्त्रसिद्धन्नतु पर्वतिथित्वम्। अतो भाद्रशुक्ल-पञ्चम्याः कालकाचार्यात्पूर्वं वार्षिकप्रतिक्रमणतिथित्वरूपम् प्रधानपर्वति-थित्वमेवासीन्न तु तदतिरिक्तं शुभतिथित्वातिरिक्तं च सामान्यपर्वतिथि-त्वम्। तत्तु प्रवचनसारोद्धारादिगतात् "चतुर्दश्यष्टमीपूर्णिमाऽमावा-स्यासु पर्वतिथिषु" इत्यादिवचनान्तरबलात् अष्टमी, चतुर्दशी, पूर्णिमा, अमावास्येति तिथिष्वेवास्ति। तास्वपि कालकाचार्यात् पूर्वम् आषाढ-कार्तिकतपस्यपूर्णिमानां चातुर्मासिकप्रतिक्रमणतिथित्वात्मकप्रधानपर्व-तिथित्वेन सह सामान्यपर्वतिथित्वमासीत्। परं कालकाचार्यादनन्तरं तदीयादेशानुसारेण भाद्रशुक्लपञ्चम्याः प्रधानपर्वतिथित्वं तच्चतुर्थ्या गृहीतं तया च शुभतिथित्वमात्रेणावस्थितम्। एवं पूर्णिमायाः चातुर्मा-सिकप्रतिक्रमणतिथित्वात्मकं प्रधानपर्वतिथित्वं तत्पूर्वचतुर्दश्याऽऽत्मसा-त्कृतं पूर्णिमया च सामान्यपर्वतिथित्वेन वर्तितम्।

चतुर्दश्याश्च सर्वस्याः पाक्षिकप्रतिक्रमणतिथित्वमनादिकालादविच्छि-न्नमायाति। अष्टम्यमावास्ययोश्चाखिलयोः पाक्षिकादिप्रतिक्रमणतिथ्या-द्यपेक्षया सामान्यपर्वतिथित्वमपि निर्बाधमागच्छति। पश्चात् पूर्णिमा-

ऽमावास्ययोः, अष्टमीचतुर्दश्योः, भाद्रशुक्लचतुर्थ्याः, द्वितीयापञ्चम्येकादशीनां पर्वतिथित्वं व्यवहृतमभवत्। ततोऽप्यनु तासामिव कल्याणकतिथीनामपि पर्वतिथित्वं व्यवह्रियमाणमवर्तत। मध्यस्थेन च भाद्रशुक्लपञ्चम्यां पूर्णिमाऽमावास्ययोश्च पर्वानन्तरसमकक्षपर्वतिथित्वमेव प्रतिषिद्धमिति तदीयनिर्णयपत्रस्य पर्यवेक्षणेन सर्वसाधारणस्यापि सुलभम्।

एवञ्च पञ्चम्याः शुभतिथित्वेन अर्वाचीनव्यवहारतः सामान्यपर्वथित्वेन वा पूर्णिमाऽमावास्ययोश्च सामान्यपर्वतिथित्वेन समाराध्यत्वेऽपि तत्क्षयनिर्देशदिने तासामाराधनं तदैव युज्यते यदि तत् तत्र दिने प्रधानपर्वतिथेर्भाद्रशुक्लचतुर्थ्याश्चतुर्दश्याः वाऽऽराधनस्य प्रतिकूलं न भवेत्। प्रतिकूलत्वे तु अप्रधानपर्वतिथीनामेव तद्दिने आराधनयोग्यतापरित्यागः प्रशस्यो न तु प्रधानपर्वतिथीनाम्, प्राधान्येन तासान्तदपेक्षयोत्कर्षात्, इति मध्यस्थोऽभिप्रैतीत्यतो विवक्षितावोधेन पताकाकृता कृतं खण्डनमखण्डनमेव।

न च भाद्रशुक्लपञ्चम्याः क्षीणत्वे यदि तस्या आराधनीयत्वं भाद्रशुक्लचतुर्थ्यां न स्वीक्रियते तदा "पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः कस्यां तिथौ क्रियते?" इति प्रश्नस्य "यदा पञ्चमी तिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते" इत्युत्तरं हीरप्रश्नग्रन्थस्थितमसङ्गतं स्यादिति वाच्यं, तत्र भाद्रशुक्लपञ्चम्याः विशेषतोऽनिर्देशेन दोषाभावात्। अयम्भावः—भाद्रशुक्लपञ्चम्यास्त्रुटितायास्तत्पूर्वस्यामाराधनीयताया अस्वीकारे उक्तो हीरप्रश्नग्रन्थस्तदैवासंगतः प्रसज्ज्येत यदि तद्ग्रन्थान्तर्गतः पञ्चमीशब्दो विशेषेण भाद्रशुक्लपञ्चमीपरो भवेत्। परं स तु पञ्चमीत्वेन पञ्चमीपर इति त्रुटितपञ्चम्यन्तरमादाय तस्य प्रश्नोत्तरग्रन्थस्योपपत्तिसम्भवेन दोषो नास्ति। न च तत्रत्यपञ्चमीपदस्य पञ्चमीसामान्यपरत्वेन भाद्रशुक्लपञ्चमीपरत्वस्याप्यावश्यकतया तस्यास्त्रुटितपञ्चम्यन्तरादन्यथाकरणं तद्ग्रन्थविरुद्धं स्यादेवेति शङ्कनीयम्, कथितप्रकारेण सर्वतः प्रधानायाः भाद्रशुक्लचतुर्थ्याः

ततोऽप्रधानायाः भाद्रशुक्लपञ्चम्याः अनुरोधेन टिप्पणप्राप्ते मुख्यदिने आराधनालोपस्यानौचित्येन उक्तहीरप्रश्नीयग्रन्थस्थपञ्चमीपदस्य भाद्रशुक्लपञ्चमीभिन्नपञ्चमीषु तात्पर्यसङ्कोचस्यावश्यकत्वात् ।

अत्रैव प्रसङ्गे पृष्ठे च "तथाहि–आवश्यकचूर्णौ–"अट्ठमीपन्नरसीसु य नियमेण हविज्ज पोसहिओ" इति, व्यवहारवृत्तौ–एतेषु चाष्टम्यादिदिवसेषु चैत्यानामन्यवसतिगतसुसाधूनां वा अवन्दने प्रत्येकं प्रायश्चित्तम्" इति । श्रीतत्त्वार्थटीकायां हारिभद्रीयायां "प्रतिपदादिषु अनियमं दर्शयति, अष्टम्यादिषु नियमः" इति, श्रीतत्त्वार्थसिद्धसेनटीकायां "अनेन चान्यासु तिथिषु अनियमं दर्शयति, नावश्यन्तयाऽन्यासु कर्तव्यः, अष्टम्यादिषु तु नियमेन कार्यः" इतीमान् ग्रन्थानुद्धृत्य प्रधानतराभिः पाक्षिकचातुर्मासिकसांवत्सरिकतिथिभिः पराभूतानामपि पूर्णिमाऽमावास्याभाद्रशुक्लपञ्चमीनां तपसस्तत्तत्तिथिनियतत्वव्यवस्थापनाय पताकाकृता प्रयतितम् । परमुद्धृतग्रन्थेष्वेकमपि पदमुपदर्शयितुन्न पारितं येन तदीयमभिलषितं पूर्यमाणं प्रतीयेत । विचारेण तु तावदेतदवसीयते यत् "प्रतिपदादिषु अनियमं दर्शयति, अष्टम्यादिषु नियमः" इत्यादिग्रन्थः "प्रतिपदादिषु" इति शब्देन प्रतिपत्पदप्रतिपिपादयिषितद्वितीयायां तत्सदृशीषु पञ्चम्यादिशुभतिथिषु अनियमम्, "अष्टम्यादिषु" इति शब्देन चाष्टम्यां पर्वान्तरापराभूतपर्वतिथित्वेन तत्सदृश्यां चतुर्दश्याञ्च नियमं प्रदर्शयति । एवञ्चोक्तग्रन्थैरपि पञ्चम्याः पूर्णिमाऽमावास्ययोश्च तिथिनियततपस्त्वन्नैव निवेद्यते । यदि चेदं समुचितमप्युदितन्नैव रुचितं पताकाकर्तुस्तदा तेन तादृशं प्रमाणं वाच्यं यत "अष्टम्यादिषु" इत्यत्रत्यादिशब्दस्य ग्राह्यतां पञ्चमीपूर्णिमाऽमावास्यादिषु साधयेत् । अस्मत्कथितेऽर्थे तु पाक्षिकादिप्रधानतरतिथीनां टिप्पणोक्ते मुख्ये काले आराधनाया अवश्यकर्तव्यसंरक्षणमेव समर्थकमिति ।

अतः पाक्षिकचातुर्मासिकसांवत्सरिकप्रतिक्रमणात्मकमेवाराधनं तिथिनियतम्, अष्टमीतरतिथीनाञ्च तपांसि न सर्वदा तिथिनियतानि किन्तु

चाधकेऽसत्येवेति यदुक्तं मध्यस्थेन तदेव श्रीजैनशास्त्रसुपरिशीलनप्रज्ञाभृतां पण्डितानामन्तःकरणसम्प्रीणने प्रवीणं नान्यत् ।

किञ्चात्र मध्यस्थस्य सुगूढोऽयमाशयो नूनमवधेयो यत् क्षीणायाः भाद्रशुक्लपञ्चम्याः पूर्णिमाया अमावास्यायाः वा क्षयदिने आराधनीयतास्वीकरणं पताकाकृत्परिपोषणीयपक्ष एव प्रधानतरपर्वतिथेर्मुख्ये दिने आराधनाबाधकतया दुःशकं तत्पक्षे क्षयनिर्देशदिने क्षीणतिथेरौदयिकीत्वस्य तद्दिनेऽक्षीणतिथेरनौदयिकीत्वनान्तरीयकत्वात् । सिद्धान्तपक्षे तु द्वादशतिथीनां क्षयदिने आराधनास्वीकरणन्नैव दुष्यति क्षीणाक्षीणतिथ्योर्द्वयोरेवैकस्मिन् दिने आराधनायाः सम्भवात् । अतः सिद्धान्ते पञ्चम्यादीनामपि तिथिनियततपस्कना यदि स्वीक्रियते तदाऽपि न किञ्चित् कालुष्यमिति ।

**त्रिंशतितमे पृष्ठे** "पञ्चमी तिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां क्रियते, पूर्णिमायां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते, त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपि" इति हीरप्रश्नग्रन्थस्यांशमुद्धृत्य "अनेनेदमवगम्यते पूर्णिमाऽमावास्ययोर्वृद्धौ त्रयोदशीवृद्धिर्भवतीति" इत्युक्तं पताकाकारेण । अत्र उक्तग्रन्थस्यांशतः पूर्णिमाऽमावास्ययोर्वृद्धौ त्रयोदशीवृद्धिभवनं प्रतीतिपथं कथमुपारोहति ? इति विद्वांसो विचारयन्तु. यदि तेन स्वकीयन्तात्पर्यमेवं वर्ण्येत यत् पूर्णिमाक्षये त्रयोदशीचतुर्दश्योर्द्वयोराराध्यताकथनेन पूर्णिमायाश्चतुर्दशीदिने औदयिकीत्वे मते तद्दिने चतुर्दश्या अनौदयिकीत्वप्रसक्त्या तस्यास्त्रयोदशीदिने औदयिकीत्वं सम्पाद्य आराधनस्योपपादनीयत्वेन त्रयोदश्या एव क्षयः कार्य इति प्रतिभाति । तथा च यथा पूर्णिमादिरूपपर्वतिथेः क्षयनिर्देशे त्रयोदशीरूपाया अपर्वतिथेरेव क्षयः सम्मतस्तथा पूर्णिमादिपर्वतिथिवृद्धौ त्रयोदश्या एव वृद्धिरुचितेति । तदा तदपि **न शोभनम्**, त्रयोदशीचतुर्दश्योः क्षीणपूर्णिमातपःकर्तव्यतावर्णनस्य तात्पर्यान्तरस्यापि सम्भवेन ततः पूर्णिमादिक्षयस्थले त्रयोदशीक्षयस्य सम्मतत्वानुमानासम्भवात् । तथा हि पूर्णिमायां समाप्यतया पूर्णिमातपस्त्वेन व्यपदेश्यं षष्ठात्मकं तपस्तस्या अक्षये चतुर्-

शीपौर्णमास्योः क्रियते। किन्तु तस्याः क्षये तस्याश्चतुर्दश्याश्चैकदिन एव समावेशे कृते तादृशं दिनद्वयसम्पाद्यं तपः कथं कार्यमिति प्रश्नोत्तरतया "पूर्णिमायां च त्रुटियायां त्रयोदशीचतुर्दश्योः क्रियते" इत्युक्तिसम्भवात्।

किञ्च पराग्रहप्राचुर्येण तथैवाभ्युपगम्य विचारे क्रियमाणेऽपि पूर्णिमावृद्धौ त्रयोदशीवृद्धिबोधकतायां "त्रयोदशीचतुर्दश्योः" इत्युक्तेः पर्यवसानन्नैव सम्भवति उक्तरीत्या क्षीणायाः पूर्णिमायाश्चतुर्दशीदिने औदयिकीत्वस्वीकारेणानौदयिकीत्वं गतायाश्चतुर्दश्यास्त्रयोदशीदिने औदयिकीत्वकरणावश्यकतया त्रयोदशीक्षयस्य यौक्तिकत्वसम्भवेऽपि पूर्णिमावृद्धौ त्रयोदश्या वर्धनस्य नितरां युक्तिशून्यत्वात्। वृद्धिं गतायाः पूर्णिमाया उत्तरदिवसीयस्यैव औदयिकीत्वस्य आराधनौपयिकतास्वीकृतौ चतुर्दश्याः प्रथमपूर्णिमादिने आकर्षणं विना अवृद्धिदशायां प्राप्तायाः द्वयोस्तिथ्योरव्यवधानेनाराधनायाः निर्वाहाभावप्रसक्तेर्वारणाय तस्याः प्रथमपूर्णिमादिने आकर्षणस्यावश्यकत्वेन तत्र पूर्णिमानिवृत्तेर्ध्रुवतया तद्वृद्धेरसिद्धत्वेऽपि चतुर्दश्याः दिनद्वये औदयिकीत्वस्य उत्तरदिन एव चाराध्यत्वेन नियमितत्वस्य स्वीकारेऽवद्यायोगेन त्रयोदशीवृद्धेः सिद्ध्यसम्भवात्।

पुनरत्रैव पृष्ठे "जीतव्यवहारेणाप्ययमेवार्थः सिद्ध्यति । जीतव्यवहारस्वरूपं च स्थानाङ्गसूत्रे पञ्चविधो व्यवहार उक्तः। तद्यथा (१) आगमः (२) श्रुतम् (३) आज्ञा (४) धारणा (५) जीतं चेति। तत्र यदा व्यवहर्तुरागमो भवेत् तदा तेनैव व्यवहर्तव्यम्। तदभावे श्रुतेन व्यवहर्तव्यम्। एवमन्यत्रापि पूर्वपूर्वाभावे परेण परेण व्यवहर्तव्यमित्यादि" इत्येवमुल्लिख्य "न च विजयदेवसामाचार्या जीतव्यवहारसिद्धत्वे किं मानमिति शङ्कनीयम्, सप्तदशशताब्दीत आरभ्य विवादोत्पत्तिसमयं यावत् तपोगच्छीयेन चतुर्विधेनापि श्रीजैनसङ्घेन श्रीविजयदेवसूरिसामाचारी समाचरितेति तत्कालीनैर्ग्रन्थैस्ताम्रशासनैराचारैश्चावगम्यते । अद्यापि विवादेऽत्रासम्पृक्तैस्तटस्थैस्सर्वैरपि तपोग-

च्छीयैराचार्यैस्तैत्र सामाचारी समाचार्यते" इत्युल्लेखो लभ्यते पताकाकृतः ।

अत्रेदं पृच्छयते यत् "जीतव्यवहारेणापि" इत्यत्रापिना किमुपादित्सितम् ? यद्यागमादिः, कुतः स स्पष्टन्नोपन्यतः ? यद्युच्यते उपन्यस्त एवासकृत् "क्षयेपूर्वा" इत्यादिक इति । तदा नैतदुक्तिर्युक्तिमती, तदर्थस्याधुनापि अव्यवस्थितत्वात् । त्वदुक्तार्थे तस्य तात्पर्यावधृतये प्रमाणान्तरस्यापेक्षणात्, तस्य चाभावात्, तादृशार्थे तद्वचोविवक्षिततागमकस्य कस्यापि जैनशास्त्रवचसोऽद्युनावधि सुचिरगवेषणयाऽप्यप्राप्तत्वात् ।

किञ्च यदि स्याज्जीतपूर्वोक्तेषु अन्यतमस्तदा तस्मिन् ज्यायसि प्रमाणे जीवति जीतोपन्यासस्य निष्प्रयोजनता स्यात् । न हि अविप्रतिपन्नप्रत्यक्षसाक्षिके लौकिकेऽर्थे तथाविधशास्त्रप्रमुक्तेऽलौकिकेऽर्थे वा भवति ततोऽवरस्य मानान्तरस्य प्रदर्शनावश्यकता, नैव कश्चित् प्रज्ञावानपेक्षते, नापि कश्चिन्मेधावान् प्रदर्शयते । अत आगमादिचतुष्टयापेक्षया जीतस्य "पूर्वपूर्वाभावे परेण व्यवहर्तव्यम्" इत्यादिना दौर्बल्यन्दर्शयित्वा तमुपन्यस्यताऽऽगमादीनामभावस्य स्वीकृतिसूचनादपिना जिघृक्षितो नैव घटते ।

अथ स पुनः पृच्छ्यते यत् "न च विजयदेवसूरिसामाचार्या जीतव्यवहारसिद्धत्वे" इत्यादिना विजयदेवसामाचार्यां जीतव्यवहारसिद्धत्वं साधयितुं प्रयस्यता पताकाकृता विजयदेवसूरिसामाचारीत्वेन का सामाचारी उपादित्सिता ? तिथ्यादिपरिचयाय प्रमाणत्वेन जैनसङ्घस्वीकृतस्य पञ्चाङ्गस्य विरोधेन पर्वतिथीनां क्षयवृद्धिस्थले पूर्वापर्वतिथीनां क्षयवृद्धिभावस्य पर्वोत्तरपर्वतिथीनां क्षयवृद्धिस्थले पूर्वपर्वतिथीनां पञ्चाङ्गप्रोक्तपारमार्थिकसमयातिरिक्तसमये आराध्यत्वस्य च स्वीकरणरूपा अन्यावा काचित् ? यदि काचिदन्या तदानवसरस्तस्य जीतव्यवहारसिद्धत्वसाधनस्य, तत्र विप्रतिपत्तेरप्रवृत्तत्वात् । यदि

प्रथमा तदा तस्या विजयदेवसम्मतत्वासिद्ध्या सामान्यतो विजयदेवसूरिसामाचार्यास्तथात्वसाधनेनापि नेष्टसिद्धिः । न चोक्तमतपत्रकारस्य विजयदेवीयत्वं सुप्रमेयमिति वाच्यम्, तस्य तत्कृतत्वे मानराहित्याद्प्रमाणत्वाच्चेति प्रागेव प्रतिपादनात् । अतो विजयदेवसूरीणां प्रशस्तौ न्यायविशारदश्रीयशोविजयप्रणीतपद्यान्युद्धरतापि न किञ्चित् स्वेप्सितं साधयितुं शक्यं पताकाकृता ।

किञ्च कचिद् विजयदेवसामाचार्या जीतव्यवहारसिद्धत्वं कचिच्च जीतव्यवहारत्वं साधयता तेन स्पष्टं वक्तव्यं यत्तेन विजयदेवसूरिसामाचार्या अर्वाचीनपरिग्रहेण प्रामाणिकता सिषाधयिषिता ? उत तयाऽर्वाचीनपरिग्रहस्य प्रमाणमूलत्वं सिषाधयिषितम् ? अथवा तस्याः जीतव्यवहारत्वं संसाध्य तद्बलेन स्वनियोक्तुर्मनोऽभिलषितं सिषाधयिषितम् ? तत्र न तावदाद्यमनवद्यम्, अर्वाचीनपरिग्रहः किम्मूलकः ? इत्यस्यैव विचार्यमाणतयाऽसिद्धप्रमाणमूलकताकेन तेन तस्याः प्रामाणिकत्वसाधनासम्भवात् । तस्याः प्रामाणिकत्वे विप्रतिपत्त्यभावेन तत्साधनस्यानावश्यकत्वात् । तत्सिद्धावपि पताकाकर्तुस्तत्प्रवर्तयितुर्वा पर्वतिथिक्षयवृद्धिसम्बन्धे विवक्षितस्यान्तर्भावासिद्ध्या फलाभावाच्च । अत एव न द्वितीयमपि द्युतिमत्, विजयदेवसूरिसामाचार्यां पर्वतिथिक्षयवृद्धिविषये श्रीसागरानन्दसूरिसमुच्यमानस्यानन्तर्भावेन तस्या इदम्मूलत्वासम्भवात् । अत एव न तृतीयमपि, तस्याः जीतव्यवहाररूपत्वेऽपि तत्र श्रीसागरानन्दसूरिविवक्षितस्याप्रविष्टतया तया तस्य समर्थनासम्भवात् ।

यदि चेदेवमुच्यते यत् पर्वतिथिक्षयवृद्धिविषये श्रीसागरानन्दसूरिसम्मतोऽर्थः विजयदेवसूरीणां समयात् तत्पूर्वसमयाद्वाऽविच्छेदेन समाद्रियमाण आयाति । न च तैरन्यैर्वा तत्सदृशैः स प्रतिषिद्धो न वा शास्त्रविरुद्धोऽतो जीतव्यवहारपदं प्राप्तयाऽधुनापि स तथैव स्वीकर्तुमुचितइति । तदा नेदं न्याय्यं युक्तं चेति समुद्घुष्यतेऽस्माभिः । यतो ह्ययमर्थो विजयदेवसूरिसमयात् तत्पूर्वसमयाद्वा स्वीक्रियमाणस्समायातीत्यत्र नास्ति

किञ्चित् प्रमाणम् । प्रत्युत क्षीणत्वे वृद्धत्वे वा पर्वतिथीनामाराधनोपपादकस्य "क्षये पूर्वा" इत्याद्युमास्वातिप्रघोषस्य दर्शनात् तत्समय एव तिथ्यादिनिर्णयाय लौकिकपञ्चाङ्गस्य प्रामाणिकत्वस्वीकारस्य सिद्धत्वेन तत्सम्मानसंरक्षणप्रवीण एव पन्था विजयदेवसूरिप्रभृतिभिर्गृहीतः स्यादित्यनुमानस्यैव निर्बाधत्वेन तात्कालिकाचारस्य प्रचलिताचारप्रतिकूलतैव सिद्ध्यति । अतः प्रचलिताचारश्चेदयुक्तोऽप्रमाणो वा तदा तैस्तत्सदृशैरन्यैर्वा कुतो न प्रतिषिद्धः ? इति प्रश्नस्यावसर एव नास्ति, एतदाचारस्य तदानीमभावात् ।

अतोऽस्मद्विचारानुसारेणायमेवार्थः सिद्ध्यति यत् पर्वतिथीनां क्षयवृद्धिप्रसङ्गे श्रीसागरानन्दसूरिसम्मत आचारः शास्त्रज्ञानसदाचारादीनां ह्रासकालाद् विजयदेवसूरिचिरोत्तरस्मात् प्रवृत्तोऽभवदिति तद्विरुद्धशास्त्रपाठबलात्, शास्त्रानुसारिणो विचाराद् युक्तिनिचयाच्च तमशास्त्रीयमाचारं निराकर्तुं पुरातनं शास्त्रीयमाचारं च पुनः प्रतिष्ठापयितुं श्रीमता रामचन्द्रसूरिमहाशयेन स्तुत्यः प्रयत्नः प्रारम्भीति ।

द्वात्रिंशे पृष्ठे "जैनशास्त्रस्य जीतव्यवहारस्य प्रामाण्यसिद्धये येऽपेक्षिताश्चत्वारोंऽशाः ( १ ) युगप्रधानसदृशाचार्यप्रवर्तितत्वम् । किमपि विशिष्टं प्रयोजनमुद्दिश्य प्रवर्तनम् ( २ ) प्रवर्तितस्य धर्मस्य शास्त्रैस्सहाविरोधः ( ३ ) संविग्नगीतार्थाचार्यैरप्रतिषेधित्वं बहुभिरनुमतत्वं चेति ते सर्वेऽप्यत्र समग्रतयोपलभ्यन्त एवेति" इति ग्रन्थात् पताकाकृता श्रीसागरानन्दसूरिसम्मतस्य पर्वतिथीनां क्षयवृद्धिविषये पञ्चाङ्गस्याप्रमाण्यं मत्वा अपर्वतिथीनामेव पूर्वपूर्वतराणां क्षयवृद्धिस्वीकरणस्य प्रामाणिकजीतव्यवहारत्वसाधने परिश्राम्यता जीतव्यवहारस्य प्रामाणिकतागमकतौपयिकानां कथितांशचतुष्टयानां सत्त्वं यदाशंसितं तन्न युक्तिमत् । तथा हि पूर्वप्रतिपादितप्रकारेण श्रीसागरानन्दसूरिसम्मते श्रीविजयदेवसूरिप्रवर्तितत्वस्यासिद्धतया तादृशापराचार्यप्रवर्तितत्वस्य श्रीसागरानन्द-

सूरेरप्यननुमततया तत्र युगप्रधानसदृशाचार्यप्रवर्तितत्वरूपस्य प्रथमांशस्याभावोऽस्ति ।

पर्वतिथीनां क्षयवृद्धयोर्वास्तवताऽभ्युपगमेऽपि सिद्धान्ते वक्ष्यमाणरीत्या तत्तत्तिथ्याराधनस्य सम्यक् पालनसम्भवेन तद्रक्षणस्य पर्वतिथीनां क्षयवृद्धयोरपारमार्थिकत्वस्वीकृतेः प्रयोजनत्वासम्भवाद् विशिष्टप्रयोजनोद्देशेन प्रवर्तनरूपस्य द्वितीयस्याप्यंशस्याभावो विद्यते ।

**सेनप्रश्ने** तृतीयोल्लासे "वृद्धौ सत्यां स्वल्पाऽप्यग्रेतना तिथिः प्रमाणम्" इति ग्रन्थेन, **कल्पसूत्रसुबोधिकायाम्** "भाद्रपदवृद्धौ प्रथमो भाद्रपदोऽपि अप्रमाणमेव यथा चतुर्दशीवृद्धौ प्रथमां चतुर्दशीमवगणय्य द्वितीयायां चतुर्दश्यां पाक्षिककृत्यं क्रियते तथा" इति ग्रन्थेन, **कल्पसूत्रदीपिकायाम्** "भाद्रपदवृद्धौ प्रथमभाद्रपदोऽपि पर्युषणाकृत्येषु अनधिकृत एव, अभिवर्द्धिततिथिरिव तदीयकृत्येषु, तथाहि विवक्षितं हि पाक्षिकप्रतिक्रमणं तस्य चतुर्दश्यां नियतं सा च यद्यपि वर्द्धिता तदा प्रथमां परित्यज्य द्वितीयाऽङ्गीकार्या" इतिग्रन्थेन, **हीरप्रश्नस्य** द्वात्रिंशे पृष्ठे पञ्चमी तिथिस्त्रुटिता भवति तदा तत्तपः कस्यां तिथौ ? पूर्णिमायाञ्च त्रुटितायां कुत्रेति ? उत्तरम्—पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते, "पूर्णिमायां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते, त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपि" इति ग्रन्थेनैतत्सदृशेनापरेणाप्यनेकेन जैनशास्त्रग्रन्थेन पर्वतिथीनां वृद्धिक्षययोः स्पष्टं प्रतिपादनात् शास्त्राविरोधरूपस्य तृतीयांशस्याप्यभावो वर्तते ।

एकोनविंशवैक्रमवत्सरस्य तुरीयभागे विद्यावृत्तादिशिथिलयतिप्राचुर्यप्राधान्ये विजृम्भमाणे "पर्वतिथीनां परमार्थतःक्षयवृद्धी न भवतः किन्तु तत्प्रसङ्गे तत्पूर्वापर्वतिथीनामेव" इत्येतदात्मनोऽर्थस्य प्रचलनात्, तदानीं च कतिपयसंविग्नगीतार्थमुनीनां सत्त्वेऽपि तेषामप्रधानतयाऽल्प-

४

संख्यतया च तत्कृतविधिप्रतिषेधयोर्धारणरक्षणादिव्यवस्थाया अभावादपि तयोरप्राप्ततायाः सम्भाव्यमानतया अप्राप्तिमात्रेण तदर्थस्य तादृशमुनिजनप्रतिषिद्धत्वाभावस्य वक्तुमशक्यत्वात् साम्प्रतिकसंविग्नगीतार्थैः क्रियमाणायाः प्रामाणिक्याः प्रतिषिद्धताया उपेक्षणस्यानौचित्याच्च संविग्नगीतार्थाप्रतिषेधित्वरूपस्य चतुर्थांशस्याप्यभावोऽस्ति ।

अतः "पर्वतिथीनां क्षयवृद्धयोष्टिप्पणस्याप्रामाण्यमुपगम्य तत्पूर्वपूर्वतराणामपर्वतिथीनामेव क्षयवृद्धी मन्तव्ये" इति श्रीसागरानन्दसूरिणोद्घुष्यमाणस्यार्थस्य जीतव्यवहारत्वं तत्सिद्धत्वं वाऽसिद्धमेवेति बोध्यम् ।

पताकायाः २४–२५ पृष्ठयोस्तत्प्रणेत्रा निर्णयपत्रस्य त्रयोदशे पृष्ठे स्थितम् "तदेवमाचार्यश्रीसागरानन्दसूरिभिरुमास्वातिवचनस्य स्वाभिमतार्थसिद्धये यानि शास्त्राणि समुपन्यस्तानि तानि शास्त्राभासान्येव" इति मध्यस्थवचनमादाय मध्यस्थस्य जैनशास्त्राणामप्रमाणत्वासच्छास्त्रत्वयोरुद्धोषकतामुद्घुष्य जैनजनतां क्षुब्धतां नेतुं या रीतिरङ्गीकृता सा न तत्स्वभावसामीचीन्यसूचने समर्था ।

तर्हि किन्तात्पर्यं मध्यस्थस्य तादृशोक्तेरिति चेत्, श्रूयताम् । श्रीसागरानन्दसूरिणोमास्वातिप्रघोषस्य प्रकृतस्य स्वाभिमतार्थसिद्धये यानि पूर्वचर्चितमतपत्रकादीनि समुपन्यस्तानि तानि न शास्त्राणि किन्तु शास्त्राभासानि यानि च सेनप्रश्नादिग्रन्थान्तर्गतानि शास्त्रात्मकवचनानि उपन्यस्तानि तान्यपि श्रीसागरानन्दसूरिविवक्षिते "पर्वतिथीनां क्षयवृद्धी न वास्तविक्यौ किन्तु तत्प्रसङ्गे तत्पूर्वापर्वतिथीनामेव ते तथाभूते" इत्येवंरूपेऽर्थे शास्त्राभासान्येव ।

न च सेनप्रश्नादिवचसामपि शास्त्राभासत्वं वदता मध्यस्थेन जैनशास्त्रावमानना कृतैवेति वक्तव्यम्, येषां शास्त्राणां यादृशार्थपरता तदीयमीमांसातो न व्यवतिष्ठते तादृशार्थकतया व्याख्यायमानानान्तेषां शास्त्राभासतायाः सर्वसुधीसद्धार्मिकाणां सम्मतत्वात् । अत एव वैदिकसम्प्रदायेऽप्यपौरुषेयाः पारमेश्वरा वा वेदा अप्यन्यथा वर्ण्यमाना

अप्रमाणतां व्रजन्तो मन्यन्ते। उचितमप्येतदेव, पूर्वापरसन्दर्भशुद्धैः सत्तर्कपरिशोधित एवार्थे शास्त्राणां शास्त्ररूपत्वात्। अन्यथा नत्ताच्छास्त्रपरिग्रहीतृसम्प्रदायप्रतिकूलानामप्यर्थानां पूर्वापरशोधनाद्यभावे तत्तच्छास्त्रतो बोधसम्भवेन तेष्वप्यर्थेषु तेषां शास्त्रत्वं प्रमाणत्वं च स्यादिति तदनुसारं प्रवर्तमानोऽधुनातनो वैदेशिकभावनाधनो जनोऽपि नैव प्रत्यवेयात् प्राप्नुयाच्च शास्त्रादेशपरिपालनप्रभवान् रमणीयपरिणामान्।

अतो वयं ब्रूमो यन्मध्यस्थेन श्रीसागरानन्दसूरिसम्मतेऽयौक्तिकेऽनेकशास्त्रीयवचोविरुद्धे दुर्घटशास्त्रवचस्के चार्थे जैनशास्त्राणां शास्त्राभासत्वं प्रमाणाभासत्वञ्चाभिदधता तेषां शास्त्रत्वं प्रमाणत्वं च सम्यक् सुरक्षितमिति मेधाविनो धर्मप्राणस्य जैनलोकस्य हार्दिकान् धन्यवादानर्हति मनीषी मध्यस्थः।

पताकायाः पञ्चविंशे पृष्ठे निर्णयपत्रस्य नवमपृष्ठस्थषष्ठविवादपदविचारान्तर्गतम् "प्रकरणं नासातीव दुर्बलं प्रमाणं वाक्यार्थनिर्णये" इति ब्रूमः" इति मध्यस्थवचनं निराचिकीर्षता पताकाकृता तदभिप्रायमविज्ञाय व्यर्थमेव बहु जल्पितम्। यतो हि मध्यस्थोऽत्रेदमेवाभिधित्सति यत् प्रकरणस्य वाक्यार्थबोधे तात्पर्यनिश्चयद्वारा, शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारदर्शितदिशा साक्षादेवापेक्षणीयत्वेऽपि तस्य नानार्थकपदघटितवाक्यस्थल एवोपयोगो नान्यत्र। अतः प्रकरणस्य काचित्कतया शाब्दबोधस्य हेत्वन्तरापेक्षया दौर्बल्यम्।

एवञ्च 'क्षये पूर्वा तिथिः कार्या" इतिवाक्यघटकस्य तिथिपदस्य नानार्थताविरहेण विवक्षितविचिकित्साया अभावात् तत्र प्रकरणप्रवृत्तेरनवसरत्वात् तिथिपदोपस्थाप्यस्य तिथिसामान्यस्य तद्वचोजन्यबोधे भानाभ्युपगमस्य निर्बाधत्वाच्च तद्वचसः कल्याणकतिथिव्यतिरिक्तपर्वतिथिमात्रपरत्वं श्रीसागरानन्दसूरिणा स्वीक्रियमाणमनादरणीयमेवेति।

यदि पुनः पूर्वमीमांसोक्तस्य तार्तीयीकस्य प्रकरणस्य बलं विवक्षितं पताकाकृतस्तन्नियुक्तिकृतो वा तदा तत्रापि युक्त्यन्तरमुखनिरीक्षकतया तादृशयुक्त्यभावे शाब्दबोधीयहेत्वन्तरापेक्षया दौर्बल्यात् प्रकृतेऽभावाच्च ततो बललाभस्याशा दुराशामात्रम् ।

अत्रैव प्रसङ्गे षड्विंशे पृष्ठे "एवञ्च प्रकरणबाधकस्य कस्यापि प्रमाणस्याभावात् "क्षये पूर्वा तिथिः" इति सामान्यतः श्रुतस्यापि तिथिपदस्य प्रकरणात् पर्वतिथिपरत्वमेव निश्चीयते, यथा "प्राश्नन्ति ब्राह्मणा ओदनम्" इत्याधानप्रकरणे पठिते आधानाङ्गभूतब्रह्मौदनप्राशनार्थं ब्राह्मणविधायके वाक्येऽविशेषश्रुतस्यापि ब्राह्मणपदस्य प्रकरणादाराधनाङ्गतया विहिताध्वर्य्वादिऋत्विङ्मात्रपरत्वं तद्वत्" इति ग्रन्थेन पताकाकृता "क्षये पूर्वा तिथिः" इत्यादिवाक्यस्थतिथिपदस्य "प्राश्नन्ति ब्राह्मणा ओदनम्" इति वाक्यघटकब्राह्मणपदेन सह यत्साम्यं प्रदर्शितम्, तन्न युक्तम्, तत्राधानप्रकरणस्येव प्रकृते कस्यचित् प्रकरणस्याभावात् । न हि पर्वतिथीनां किञ्चित् प्रकरणमेवं प्रसिद्धमस्ति यत्र "क्षये पूर्वा तिथिः" इत्यादिवचसः पाठबलात् तद्घटकस्य तिथिपदस्य पर्वतिथौ प्रधानपर्वतिथौ वा सङ्कोचः सिद्ध्येत् । यदि चास्ति प्रकरणं तादृशं किञ्चित्, कुतस्तर्हि तदुपन्यासमकृत्वा स्वात्मनस्तदज्ञातृत्वानुमानावसरः प्रदत्तश्चतुरेणापि तेन ।

अत एवात्र प्रसङ्गे पताकाकारेण "सैन्धवमानय" इति लौकिकं वाक्यं दर्शपूर्णमासप्रकरणपठितं "समिधो यजति" इत्यादि शास्त्रीयं वाक्यञ्चोपादाय प्रकरणस्य वाक्यार्थनिर्णयोपयोगितासाधनाय यः प्रयासः कृतः स व्यर्थ एव, मध्यस्थेन तस्य तत्रानुपयोगितया अनुल्लेखात् किन्तु काचित्कतया युक्त्यन्तरमुखपर्यवेक्षकतया च तस्य शाब्दबोधीयहेत्वन्तरापेक्षया दौर्बल्यस्यैव कथनात् ।

न च निर्णयपत्रस्य नवमे पृष्ठे तिथीनां पर्वापर्वत्वेनाशक्यविभामताम् अष्टमीचतुर्दश्यादीनां प्रधानपर्वतिथिताञ्च ब्रुवाणस्य मध्यस्थस्य व्याहतवचस्त्वमिति वाच्यम्, यतो हि मध्यस्थो न तिथीनां पर्वापर्वत्वेन

विभागाभावमभिप्रैति, किन्तु "क्षये पूर्वा" इत्यादिवचनमुद्दिश्य पर्वापर्व-विभागो नास्तीत्येव ब्रवीति। अर्थात् "क्षये पूर्वा" इत्यादिवचसः कल्याणकतिथिव्यतिरिक्तपर्वतिथिमात्रपरतासाधनायाष्टम्यादीनां पर्व-तिथित्वं प्रधानपर्वतिथित्वं वा, कल्याणकतिथीनामपर्वतिथित्वं सामा-न्यपर्वतिथित्वं वेति विभागः श्रीसागरानन्दसूरिणा वर्ण्यमानो निष्प्र-माणकः। पर्वतिथीनामष्टम्यादीनामिव कल्याणकतिथीनामपि क्षय-वृद्धिस्थलयोराराधनानियमनार्थं तस्य प्रधानाप्रधानसाधारणपर्वतिथिप-रताया आवश्यकत्वेन सर्वतिथिपरताया एव स्वीकारस्यौचित्यात्।

षड्विंशे पृष्ठे "एवञ्चाराधनायां पर्वतिथेः परमार्थतः क्षयो वृद्धिर्वा नास्ति इति श्रीसागरानन्दसूरीणां मतम्" इति पताकाकारकथनं स्पष्टमाचष्टे यत्स विवादास्पदमतभेदौ न विजानाति, यतो हि आरा-धनायां पर्वतिथे क्षयो वृद्धिर्वा नास्तीति न कस्याप्यनुमतम्। किन्तु विव-दमानयोराचार्ययोर्मतभेदस्य बीजमन्यदेवास्ति। तद् यथा श्रीसागरा-नन्दसूरिमते प्रचलता पञ्चाङ्गेन निर्दिष्टे पर्वतिथीनां क्षयवृद्धी न सत्ये, अर्थात् पर्वतिथीनां क्षयो वृद्धिश्च नैव भवतः। अतो यत्र पञ्चाङ्गेन-तयोर्निर्देशः क्रियते तत्र पर्वतिथीनां क्षयवृद्धी न स्वीकृत्य ततः पूर्वायाः पूर्वतरायाः वाऽपर्वतिथेरेव यथोचितं क्षयवृद्धी मन्तव्ये। श्रीरामचन्द्र-सूरिमते तु पञ्चाङ्गेन निर्दिश्यमाने पर्वतिथीनां क्षयवृद्धी अन्यतिथीनां क्षयवृद्धी इव सत्ये एव। किन्तु क्षीणापि पर्वतिथिरक्षीणेव वृद्धापि चावृ-द्धेव तन्निवृत्तियुक्ते दिने आराधनार्थमुपादेया "क्षये पूर्वा" इत्या-द्युमास्वातिवाचकवचः प्रामाण्यात्।

अत एव वयं ब्रूमो यत् पर्वतिथीनामाराधनायां क्षयवृद्ध्यभावस्य श्रीसागरानन्दसूरिसम्मतत्ववचनेन सूच्यमानस्य श्रीरामचन्द्रसूरिसम्मतत्वा-भावस्य आराधनाऽपेक्षापरित्यागेन पर्वतिथीनामपि क्षयवृद्धिमत्तायाः श्रीसागरानन्दसूरिसम्मतत्वस्य चासङ्गततया तद्वचनं पताकाकृतो विवादा-स्पदविषये मतभेदाज्ञानं व्यनक्तीति।

२६-२७ पृष्ठयोः "तथाहि" अभिवड्डियसंवच्छरे जत्थ अहियमासो पडति तो आसाढपूण्णिमाओ विसतिराते गते भणणति-ठियामोत्ति" इति निशीथचूर्णिगतं वचनम् । अस्यायमनुवादः-अभिवर्द्धितसंवत्सरे यदाऽधिकमासो भवति तदा आषाढपूर्णिमातो विंशतौ रात्रिषु गतासु भणति यत् वयं स्थिताः स्म इति । प्राचीनज्योतिर्गणितानुसारेण पञ्चवर्षात्मके युगे युगमध्ये पौषमासस्य युगान्ते चाषाढ़मासस्येति द्वयोरेव मासयोर्वृद्धिर्भवति । तत्र युगमध्ये पौषमासस्य वृद्धौ सत्यां आषाढ़पूर्णिमायास्सत्त्वेन तदुक्तिसम्भवेऽपि आषाढ़मासस्य युगान्ते वृद्धौ सत्यां सूर्यप्रज्ञप्तिज्योतिष्करण्डकादिशास्त्रप्रामाण्येन क्षयं प्राप्ताया द्वितीयाषाढ़पूर्णिमाया उपादानमयुक्तमेव स्यात् । तदुपादानेन चाराधनायां तस्याः क्षयाभावः स्पष्टं प्रतीयते" इति पताकाकृतः प्रबन्धः प्राप्यते ।

अत्र स पृच्छ्यते यत् पर्वतिथीनां क्षयो वृद्धिर्वा वस्तुतो नैव भवतीति श्रीसागरानन्दसूरिमतव्यवस्थापनार्थं प्रवृत्तः स सूर्यप्रज्ञप्तिप्रभृतीनां जैनग्रन्थानामेव प्रामाण्यबलेन युगान्ते द्वितीयाषाढ़पूर्णिमाया अवश्यं क्षीणतां ब्रुवन् किं स्वसमर्थनीयस्योक्तमतबालविटपस्य मूलमत्युष्णेन वारिणा नाभिषिञ्चति ! अग्रे "तदुपादानेन चाराधनायां तस्याः क्षयाभावः स्पष्टं प्रतीयते" इत्युक्त्या च वस्तुतः क्षीणापि पर्वतिथिराराधनायां न क्षीयत इत्यात्मविरुद्धवादं स्वरक्षणीयपक्षस्य वक्षसि मुष्टिप्रहाराय लब्धावसरं न करोति ?

अतः पताकाकृतो ग्रन्थादमुष्मादिदं विज्ञायते यत् कुतश्चित्कारणादतात्त्विके पक्षे प्रसभं तेन प्रेर्यमाणाऽपि तदीया धीः "तत्त्वपक्षपातो हि धियां स्वभावः" इत्येवं प्रसिद्धस्य धीस्वभावस्यानुरोधेन तत्त्वरूपं श्रीरामचन्द्रसूरिसम्मतं पर्वतिथीनां क्षयवृद्धी वस्तुतः सत्ये अपि तासामाराधनार्थमपेक्ष्ययोः क्षयवृद्ध्यभावयोर्न प्रतिकूले इत्येतादृशं पक्षं बलादालिङ्गति ।

**सप्तत्रिंशतितमे** पृष्ठे "एवं सेनप्रश्नस्य तृतीयोल्लासे एकादशीवृद्धौ श्रीहीरविजयसूरीणां निर्वाणमहिमपौषधोपवासकृत्यं पूर्वस्यामपरस्यां वा कुत्रानुष्ठेयम् ? इति प्रश्नस्योत्तरतया "औदयिक्येकादश्यां श्रीहीरविजयसूरिनिर्वाणपौषधादि विधेयम्" इत्युक्तम् । अत्राप्येकादश्याः परमार्थतो वृद्धिस्वीकारे उभयत्रौदयिकीत्वसत्त्वेन औदयिक्यामेकादश्यामिति कथनमसङ्गतं स्यात् ! तेनावगम्यते वस्तुतः पर्वतिथेर्वृद्ध्यभावेनैकैवौदयिकी एकादशी भवति । तस्यां च शास्त्रत एकस्यामेव प्राप्तायामौदयिक्यामेकादश्यां पौषधाद्यनुष्ठेयमिति" इति पताकाकृतो ग्रन्थ उपलभ्यते ।

एतद्ग्रन्थतस्तदीयोऽयमाशयो बोधमध्यारोहति यदेकादश्याः वृद्धिरुत्तरकर्तुर्न सम्मता, अन्यथा एकादश्यामौदयिकीत्वस्य पूर्वोत्तरयोर्द्वयोरेव दिनयोः सत्त्वेन "औदयिक्येकादश्याम्" इत्युत्तरमुक्तप्रश्नस्य न संगच्छेत । परं वयमिदमत्र प्रष्टुमभिलषामस्तं यदुत्तरकर्तुः एकादशीवृद्धेरनभिमतत्वस्वीकारेऽपि टिप्पणेन दिनद्वये औदयिकीत्वेनैकादश्याः निर्दिष्टतया तस्यां कस्मिन् दिने श्रीहीरविजयनिर्वाणमहिमपौषधोपवासकृत्यं कार्यम् ? यतो हि उत्तरयिता पताकाकृन्मते उत्तरस्मिन्नेकस्मिन्नेवाहनि तस्या औदयिकीत्वं जानन्नपि स्पष्टं तन्न कथयति, प्रष्टा च पञ्चाङ्गतो दिनद्वये तस्या औदयिकीत्वं जानाति । अतस्तदुत्तरवचनादेकादश्या एकस्मिन्नेव दिने औदयिकीत्वं समाधातुः सम्मतमित्यनुमायापि कस्मिन् दिने तत्तत्र तस्यानुमतमित्यनुमातुमशक्यतया तादृशादुत्तराज्जीर्णजिज्ञासो नैव जायते प्रष्टा । अतोऽत्रेदमुचितमाभाति माननं यत् "औदयिक्येकादश्याम्" इत्युत्तरं श्रुत्वा प्राश्निकस्तदर्थं विमृशन् उक्तोत्तरवाक्यस्य "औदयिक्यामेव एकादश्याम्" इत्यर्थेऽर्थाद् यत्र दिने एकादशी औदयिकी-सूर्योदयस्पर्शिनी एव नत्वस्तकालिकी तत्र दिने तस्यां तादृशं कृत्यं कार्यमित्यर्थे तात्पर्यं प्रतिसन्दधानो द्वितीयदिन एव एकादश्यास्तथात्वेन तत्रैव दिने तस्या उपादेयतां सम्प्रधार्य विनिवृत्तविप्रतिपत्तिर्भवति । इत्थं चैतादृशार्थकान् कथितो-

त्तारवाक्यात् एकादशीवृद्धेरुत्तरकर्तुरनभिमतत्त्वानुमानं नैव कर्तुं शक्यत इत्यतोऽत्रत्यं वक्तव्यं पताकाकारस्य साम्पातिकमेवाभ्युपेयम् ।

अत्रैव पृष्ठे "मध्यस्थस्वरूपं तत्कर्तव्यञ्च" इति शीर्षकेण सह 'कथन्ति वाक्यान्युपनिबध्नता पताकाकृता प्रकृतमध्यस्थस्य माध्यस्थ्याच्च्युतिं प्रदर्शयितुं प्रचुरं पराक्रान्तम् । "निर्णयितुम्' इत्येवंविधशब्दान् विन्यस्यता च शब्दशास्त्रप्रजापतिपाणिनिप्रभृतिविद्वन्मुनिवृन्दमपि समाक्रान्तम् । अत्र विषये नाधिकमभिधाय केवलमेतदेव स प्रष्टुमिष्यते यत्किन्तेन स्वयं काशीस्थसत्पण्डितस्य स्वरूपं कर्तव्यञ्च संरक्षितम् ? उभयपक्षाभ्यां माध्यस्थ्येन वृतस्य निर्णयो मान्यः, कुतोऽपिहेतोस्तस्यानुचिताचारतासंशये च पक्षद्वयनिर्वाचित एवापरो विद्वान् विद्वत्समवायो वा पुनर्निर्णयदानाय प्रार्थनीय इत्युचितां न्याय्यां च सम्मतिं दत्त्वा कस्यचिद्वाच्यस्य कारणस्य परवशो भूत्वा स्वयमेवान्यं निजनियोक्तृप्रीणनप्रवीणं निर्णयं लिखित्वा द्वारि द्वारि मुहुर्मुहुर्भ्रमणिकया विनयादिविविधमुद्रया च विदुषां हस्ताक्षरसङ्ग्रहं कृत्वा च किन्तेन न केवलमात्मनोऽपितु वाराणस्याः विद्वत्समाजस्य सम्मानो नैवाधरीकृतः ? येन मध्यस्थं मुधैवाधिक्षिपता न मन्दोऽपि मन्दाक्षोऽनुभूतः ।

शासनजयपताकायाः संक्षिप्तेनाप्येतावता पर्यालोचनेनेदं स्पष्टीभवति यन्मध्यस्थेन निजे निर्णयपत्रे निर्णीतार्थानां यदालोचनं कृतं पताकाकृता तन्न केवलमालोचनभाववञ्चितं किन्तु स्वाचरितुः पदपदार्थप्रकृतविवादास्पदप्रभृतौ परिचयशून्यतामनधिकारिताञ्च प्रकाशयति । अतोऽस्मत्समित्या पताकाकृतो व्यवस्थापत्रस्य सम्बन्धे वाराणसेयविद्वत्प्रतिष्ठासंरक्षणैकधिया यत्किमपि कथितं तत्सुधाभावेन स्वीकृत्य समर्थयिष्यमाणस्य जैनशास्त्राणां प्राचीनतमजैनसदाचाराणाञ्चानुकूलस्य श्रीमद्रामचन्द्रसूरिसमुपस्थापितसिद्धान्तस्य पालनकर्मताऽऽयतनाकरणेन पुण्यपुञ्जमुपार्जनीयम् ।

अथ "क्षये पूर्वा तिथिः कार्या" इत्युमास्वातिवचनस्योत्थानबीजं किम् ? को वा जैनशास्त्रसयुक्तिसम्मतस्तदीयोऽर्थः ? इति निरूप्यते:—

जैनशास्त्रेषु प्रतिमासमष्टम्योश्चतुर्दश्योः पूर्णिमाऽमावास्ययोः द्वितीययोः पञ्चम्योरेकादश्योः, भाद्रशुक्लचतुर्थ्याः कल्याणकतिथीनाञ्च पर्वतिथिभावेन समाराधनमादिष्टमस्ति । तत्र यास्तिथयो यत्र दिने सूर्योदयात्प्रवृत्त्य दिनान्तरीयसूर्योदयञ्चाप्राप्यैव समाप्तिं यान्ति तासान्तद्दिने समाराधनं निष्प्रत्यूहम् । परं याः पूर्वदिने सूर्योदयानन्तरं प्रवृत्त्य दिनान्तरे सूर्योदयानन्तरं निवर्तन्ते, तासां विषये भवति जिज्ञासा, यत्ताः पूर्वदिने आराध्या उत्तरदिने वा अथवा दिनद्वय एवेति ?

अतः "तिथिश्च प्रातः प्रत्याख्यानवेलायां या स्यात् सा प्रमाणम्" ।

"चाउम्मासि अवरिसे पक्खिय पञ्चट्ठमीसु नायव्वा ।
ताओ तिहिओ जासिं, उदेइ सूरो न अण्णाओ" ॥ १ ॥

"पूजा पच्चक्खाणं पडिक्कमणं तहय नियमगहणं च ।
जीए उदेइ सूरो, तीइ तिहीए उ कायव्वं" ॥ २ ॥

"उदयं मि जा तिही सा पमाणमिअरीइ कीरमाणीए ।
आणाभंगणवत्थामिच्छत्त विराहणं पावे" ॥ ३ ॥

"आदित्योदयवेलायां या स्तोकाऽपि तिथिर्भवेत् ।
सा सम्पूर्णेति मन्तव्या प्रभूता नोदयं विना" ॥ ४ ॥

इत्यादिशास्त्रवचनानि तादृशतिथीनां तादृशतिथिस्पर्शिसूर्योदयारब्धे दिने समाराध्यताव्यवस्थापनेन निर्दिष्टां जिज्ञासां निवर्तयन्ति ।

एवञ्च पर्वतिथ्याराधनाविधायकवचसां तिथ्यौदयिकीत्वस्याराधनौपयिकताबोधकवचसां च परस्परैकवाक्यतया "सर्वा अष्टम्यादिपर्वतिथयः स्वस्पर्शिसूर्योदयारब्धे दिने आराध्या" इत्येवंविधो जैनशास्त्रीयः पर्वतिथ्याराधनाऽऽदेशो लभ्यते ।

इत्थञ्च याः पर्वतिथयः सूर्योदयस्पर्शरहिता एव समाप्तिं व्रजन्ति, तत्स्पर्शिसूर्योदयारब्धदिनाप्रसिद्ध्या तासामाराधनालोपः प्राप्नोति, न चैष इष्टतयाऽभ्युपगन्तुमुचितः, सर्वासामेव पर्वतिथीनामवश्याराध्यतायाः शास्त्रैरादेशात् । अतो धर्मलोपभीरोर्जनस्य जायते तावदेषा जिज्ञासा यत् सूर्योदयस्पर्शराहित्यरूपक्षयभाजां पर्वतिथीनामाराधना कथं कार्या ? इति तादृशीनां क्षीणतिथीनामाराधनोपपादकतया "क्षये पूर्वा तिथिः कार्या" इत्याचार्योमास्वातिवाचकमुख्यमुखारविन्दविनिर्गतवचोमकरन्दो मनांस्युल्लासयन्नार्हतनरमिलिन्दानां समुत्तिष्ठति समारोहति च सम्भावनापदवीं प्रकारपञ्चकेन क्षीणतिथ्याराधनोपपादनायाः ।

तद् यथा:—

(१) पर्वतिथेः टिप्पणोक्तं क्षयमस्वीकृत्य तस्याः सूर्योदयस्पर्शलक्षणस्यौदयिकीत्वस्य स्वीकारेण ।

(२) सूर्योदयस्पर्शात्मकौदयिकीत्वव्यतिरिक्तस्य तद्दिने समाप्तत्वरूपस्य पारिभाषिकौदयिकीत्वस्य पर्वतिथ्याराधनाप्रयोजकत्वाङ्गीकारेण ।

(३) सूर्योदयस्पर्शलक्षणस्यौदयिकीत्वस्य सूर्योदयस्पर्शिनीनामेव तिथीनां तत्स्पर्शरहितानाञ्च समाप्तत्वस्याराधनौपयिकतासमादरेण ।

(४) औदयिक्यास्तिथेः कथञ्चिदनौदयिकपर्वतिथिरूपतामाननेन ।

(५) टिप्पणादौदयिक्यास्तिथेरनौदयिकपर्वतिथिप्रातिनिध्याभ्युपगमेन ।

(१) तत्र यदि प्रथमः पक्षः आश्रीयते तदा 'क्षये पूर्वा तिथिः कार्या" इति वचनस्य क्षयदिने सूर्योदयकालादेव क्षीणतिथिप्रवृत्तिबोधकता वक्तव्या । तदर्थश्च — "क्षये–पर्वतिथेः क्षये टिप्पणप्राप्ते सति, पूर्वा–

टिप्पणेनौदयिकीत्वेन निर्दिष्टा तिथिः, तिथिः—क्षीणपर्वतिथिरूपा, कार्या, अर्थात् तद्दिवसीयसूर्योदयादिकालेऽपर्वतिथेः सम्बन्धमसत्वा तद्दिवसीयक्षीणपर्वतिथेः सम्बन्धो मन्तव्यः, इत्येवंरूपोऽङ्गीकार्यः । एवञ्च वचनमेतत् क्षीणायाः पर्वतिथेरौदयिकीत्वं प्रबोधयद् द्वयोस्तिथ्योरेकेन सूर्योदयेन सह सम्बन्धस्यासम्भवतया टिप्पणतोऽक्षीणायास्तिथेः क्षीणत्वव्यवस्थापने पर्यवस्यति ।

फलतोऽपर्वतिथिपूर्विकायाः क्षयग्रस्ताया अष्टम्यादिरूपायाः पर्वतिथेरक्षीणत्वे सम्पन्ने तत्पूर्वापर्वतिथेः क्षीणता सम्पद्यते । पर्वतिथिपूर्विकायाः पूर्णिमादिरूपायाः पर्वतिथेस्तु तेन वचसा टिप्पणतश्चतुर्दशीमति दिनेऽक्षीणत्वव्यवस्थितौ ततो निवृत्तायाश्चतुर्दश्या अपि पर्वतिथित्वेनास्वीकार्यक्षयतया पुनः प्रवृत्तेन तेनैव वचसाऽव्यवहितपूर्वे त्रयोदशीदिनेऽक्षीणत्वं त्रयोदश्याश्चापर्वतिथ्याः क्षीणत्वं निष्पद्यते । अयमेव च पक्षः श्रीसागरानन्दसूरिणा स्वीकृतः ।

**एवमेष पक्षो न सङ्गतः,** यतो ह्येवं स्वीकारे टिप्पणस्य प्रामाण्ये **एतच्छास्त्रस्य** एतच्छास्त्रस्य प्रामाण्ये च टिप्पणस्याप्रतीकार्यमप्रामाण्यं प्रसज्यते । न च भवतु नाम टिप्पणस्य पर्वतिथिप्रवृत्तिनिवृत्तिविषयेऽप्रामाण्यम्, किन्तेन हीयते ? इति वाच्यम्, पर्वतिथीनां प्रवृत्तिनिवृत्तिविषये टिप्पणस्याप्रमाणत्वस्वीकारे तद्भोगविषये तिथ्यन्तरादीनामपि प्रवृत्त्यादिविषये च तस्याप्रामाण्यशङ्कायाः सम्भवेन तस्याविश्वसनीयत्वापत्त्या साधनान्तरस्य च तिथ्यादिपरिचायकस्याभावेन सर्वाराधनाविलयापत्तेः । पर्वानन्तरपर्वतिथिक्षयस्थले च पूर्वपर्वतिथेः मुख्यकाले प्राप्ताया आराधनाया अनुपपन्नतया तद्विराधनाप्रसक्तेश्च ।

न चैतस्य वचसो दृशा क्षीणोत्तरपर्वतिथिकायाः पर्वतिथेः टिप्पणोक्तकालो मुख्यकाल एव न भवति किन्तु टिप्पणोक्तस्तादृशपर्वतिथिकालः क्षीणाया उत्तरपर्वतिथेः मुख्यः कालः टिप्पणोक्तः पूर्वपर्वतिथिपूर्वाया अपर्वतिथेः कालश्च तादृश्याः पूर्वपर्वतिथेः

मुख्यः काल इति नैष द्वितीयो दोष इति वाच्यम् । एतत्कथायाः निजश्रद्धान्धसेवकानां समक्षमेव सम्भवात् । तिथिप्रवृत्त्यादिरूपे टिप्पणस्य निजासाधारणविषये धर्मशास्त्रात्मनोऽपि तस्य वचसः सङ्क्रमणस्यान्याय्यताविदां बुद्धिविचारशास्त्रवस्तुश्रद्धाजुषामपरेषां समक्षन्तु तस्य अत्यन्तमुपहसनीयत्वात् । प्रकारान्तरेण तेन वचसा क्षीणतिथीनामाराधनोपपादनस्य करणासम्भव एव तादृशकल्पनायाः कथञ्चित् सम्भवदवतारत्वाच्च ।

न च "तिथिश्च प्रातः प्रत्याख्यानवेलायां या स्यात् सा प्रमाणम्" इति वचनं या तिथिर्यस्मिन् दिने सूर्योदयसमये भवति तस्या एव सम्पूर्णं तदहोरात्रे सत्तारूपाम् प्रमाणतामाचष्टे । तथा च टिप्पणतः क्षीणायाः पर्वतिथेः सूर्योदयसमयेऽवस्थानकल्पनं विना तस्या अस्तित्वमेव न सिद्ध्यति तत्त्वयदिने सूर्योदयकालिक्यास्तिथेरेवोक्तवचनानुसारेणाहोरात्रं व्याप्तत्वात् । अतस्तदाराधनालोपवारणाय तस्याः सूर्योदयेन सह सम्बन्धस्तदनुरोधेन च पूर्वतिथेः क्षयः कल्पनीय एवेति वाच्यम्, एतदुक्तेरपि "तिथिश्च प्रातः" इत्यादिवचनार्थपरिज्ञानाभावस्यैव विजृम्भणात् । तथाहि नैतद्वचः सूर्योदयकालिक्यास्तिथेरहोरात्रव्यापितां वदति तथा सति तस्य पूर्वदिने टिप्पणप्राप्तस्य तत्तत्तिथिसम्बन्धस्य निषेधकताया उत्तरदिने टिप्पणोक्तं तत्तिथिकालं यावत् तत्तिथिसम्बन्धानुवादकताया अवशिष्टे काले च तत्तिथिसम्बन्धविधायकतायाः स्वीकार्यत्वापत्त्या टिप्पणस्यात्यन्तमाकुलीभावापत्तेः । तिथ्यादिप्रवृत्त्यादिरूपे टिप्पणविषये तत्प्रवृत्त्यनुपपत्तेश्च । किन्तु या तिथिर्यत्र दिने सूर्योदयकालिकी तत्रैव दिने सा धर्मानुष्ठाने ग्रहणार्हा पूर्वदिने तत्तिथेरधिककालव्यापिकाऽपि सत्ता सूर्योदयस्पर्शदिने तस्याः स्वल्पाया अपि सत्ताया अपेक्षया धर्मकार्येष्वनुपयुक्तैवेत्येतत्प्रतिपादनपरमेव तद्वचनम् । उचितमप्येतत्तात्पर्यकत्वमेव तस्य, तस्यैतदर्थतायां दोषाभावात् पूर्वोक्तार्थतायाञ्च कथितानेकदूषणग्रासात् ।

नचैवं समग्रे दिने सूर्योदयकालिक्यास्तिथेः सत्तानङ्गीकारे समस्ते तद्दिवसे लोकाभ्युपगतस्तादृशतिथिव्यवहारो न संगच्छेतेति शङ्कनीयं सूर्योदयकालिक्यास्तिथेः टिप्पणोक्तसमयमात्रं यावदवस्थानेनापि तत्परस्य "अद्यामुकतिथिः" इति स्वारसिकस्य लोकव्यवहारस्योपपत्तौ बाधकाभावात्, "अद्याहोरात्रममुकतिथिः" इति व्यवहारस्य त्वसिद्धत्वात्। "आदित्योदयवेलायां या स्तोकाऽपि तिथिर्भवेत्। सा सम्पूर्णेति मन्तव्या प्रभूता नोदयं विना" इति स्मृतिवचसोऽपि पूर्वदिनेऽधिककालं सत्त्वेऽपि तद्दिने सूर्योदयस्पर्शविधुरतया तद्दिनापेक्षया उत्तरदिने स्वल्पायुष्ट्वेऽपि प्राप्तसूर्योदयस्पर्शतया तद्दिने तिथेः प्राधान्यवर्णन एव तात्पर्यं न तु तस्या उत्तरदिनेऽहोरात्रव्यापिन्याः सत्तायाः वर्णने। उत्तरदिने सम्पूर्णतोक्तिरपि न तस्याः सम्पूर्णदिनव्यापितावोधनपरा किन्तु समाप्ततया तत्पूर्णताप्रतिपादनपरा, युज्यतेऽप्येतदेव, पूर्णतायाः समाप्ततानियतत्वात्। अत एव तत्त्वतरङ्गिण्यां श्रीधर्मसागरमहाभागैः "संपुण्णत्तिअ काउं वुड्ढीए" इत्यादिसप्तदशगाथाव्याख्यायां वृद्धायास्तिथेः पूर्वदिनेऽहोरात्रव्यापित्वेऽपि तत्र दिने "अद्य सम्पूर्णा तिथिः" इयि बुद्धेर्भ्रमरूपत्वमुक्तम्। पुनश्च "तं पुण असच्चवणम्" इत्याद्येकोनविंशगाथाव्याख्यायां "कथं पूर्णा तिथिरद्य वासरे इति वक्तुं युक्तम्" इति ग्रन्थतः पूर्वदिनेऽहोरात्रव्यापिन्या अपि वृद्धायास्तिथेः पूर्णत्वं निराकृत्योत्तरदिने स्वल्पकालस्थितिकाया अपि तस्याः "एकादिघटिकासंयुक्तेऽपि दिने अद्यामुका तिथिरिति सार्वजनीनव्यवहार" इत्यादिना समाप्ततया पूर्णत्वं वर्णितम्। अतो वैमत्यविनाकृतं व्यवस्थितमेतद् यत्तिथीनां प्रवृत्तिस्थितिनिवृत्तिषु ज्योतिषस्य तदुपजीविनः टिप्पणस्यैव च प्रामाण्यम्। धर्मशास्त्राणि तु कीदृशी तिथिः कस्मिन्नहनि धर्मकार्येषु ग्राह्या इत्येतदाद्येव प्रतिपादयन्ति।

न च जैनसम्प्रदाये पर्वतिथ्याराधनायाः पूर्वदिवसीयसूर्योदयसमयादारभ्य द्वितीयदिवसीयसूर्योदयान्तं यावत् करणीयतया पर्वतिथ्या-

रम्भस्य पूर्वसूर्योदयसमयात् तत्समाप्तेश्चोत्तरसूर्योदयसमये माननीयत्वेन क्षीणपर्वतिथेः क्षयदिने सूर्योदयसमयादेवारम्भो वाच्योऽन्यथा तदस्तितालोपस्य दुर्निवारत्वं स्यादिति तदर्थं "क्षये पूर्वा तिथिः कार्या" इति शास्त्रस्य क्षयदिने सूर्योदयसमये क्षीणपर्वतिथिसम्बन्धविधायकत्वस्यावश्यमभ्युपगमनीयतया तत्पूर्वापर्वतिथेः क्षयोऽनिवार्यसिद्धिक इति वाच्यम्, अन्यतिथीनामिव पर्वतिथीनामप्यारम्भसमाप्त्योः टिप्पणोदितसमय एव मान्यतायाः न्याय्यत्वात्, आराधनाया आरम्भस्य तु जैनशास्त्रीयव्यवस्थाऽनुरोधेन पूर्वतः प्रवृत्तायाः पर्वतिथेः तत्सूर्योदयस्पर्शसमयात् क्षीणायाश्च तत्पूर्वसूर्योदयसमयात् वृद्धायाश्च द्वितीयसूर्योदयसमयात्, समाप्तेश्चारम्भोत्तरसूर्योदयेऽवसिते स्वीकार्यताया औचित्यात्। नचाहोरात्रं पर्वतथसम्बन्धानङ्गीकारे तत्सम्बन्धविधुरे तद्दिनभागे तदसम्बद्धवासरान्तर इव तदाराधनाया अकार्यत्वसम्भवेन तन्निवृत्तौ परित्यक्ताया अपि तदाराधनायाः साफल्यं तद्भङ्गभवदोषवैकल्यं च स्यादिति वाच्यम्, या तिथिर्यत्सूर्योदयारब्धे दिने समाप्नोति तत्सूर्योदयारब्धे समग्रे दिने तत्तिथ्याराधनायाः शास्त्रादिष्टतया तत्तिथिनिवृत्तावपि तद्दिननिवृत्तेः पूर्वं तत्त्यागस्य पापापादकत्वात्।

पर्वतिथेः टिप्पणोक्तं क्षयमस्वीकृत्य ततः पूर्वायाः पूर्वतरायाः वाऽपर्वतिथेः पर्वतिथिक्षयदिने सत्तासंज्ञयोर्लोपपर्यवसायी तत्क्षयाभ्युपगमो जैनशास्त्रविरुद्धतयाऽपि नाङ्गीकार्यः।

तथाहि—**तरङ्गतरङ्गिण्याम्** "तहियाए पुव्वतिही" इत्यादिचतुर्थगाथायाः व्याख्यानम् "नन्वौदयिकतिथिस्वीकारान्यतिथितिरस्कारप्रवणयोरावयोः कथं त्रयोदश्या अपि चतुर्दशीत्वेन स्वीकारो युक्तः" इति ग्रन्थेन खरतरोत्थापितप्रश्नस्य तत्र त्रयोदशीति व्यपदेशस्याप्यसम्भवात्, किन्तु प्रायश्चित्तादिविधौ चतुर्दश्येवेति व्यपदिश्यमानत्वात्" इत्युत्तरं ददता

तत्त्वतरङ्गिणीकृता क्षीणचतुर्दशीदिने त्रयोदशीव्यपदेशासम्भवत्वाभिधानपूर्वकचतुर्दशोमात्रस्य व्यपदेशार्हतामुक्त्वा "संवच्छर चउमासे पक्खे अट्ठाहियासु य तिहीसु। ताउ पमाणं भणया जाओ सूरो उदयमेइ" "अह जइ कहवि न लब्भंति ताओ सूरुग्गमेण जुत्ताओ। ता अवरविद्ध अवरावि हुज्ज नहु पुव्व तव्विद्धा" ॥ २ ॥ इति यद्गाथाद्वयमुद्धृतम्, तत्र "अवरविद्ध अवरावि" इति शब्दे दत्तावधानेन स्वरूतरेण "न च प्राक्चतुर्दश्येवेत्युक्तम्, अत्र तु 'अवरावि' इत्यनेन अपिशब्दादन्यसंज्ञापि गृह्यते तत्कथं न विरोधः "इति ग्रन्थेनोद्भावितस्य पूर्वापरोक्तयोर्विरोधस्य परिजिहीर्षया" प्रायश्चित्तादिविधावत्युक्तत्वात्, गौणमुख्यभेदात् मुख्यतया चतुर्दश्या एव व्यपदेशो युक्त इत्यभिप्रायेणोक्तत्वाद्वा" इति वाक्यं ग्रन्थकृता सन्दब्धम्।

एतदखिलप्रसङ्गपर्यालोचनेन स्पष्टमिदं प्रतिभाति यद् ग्रन्थकृतः क्षीणचतुर्दशीदिने त्रयोदशीचतुर्दश्योरुभयोरेव सत्त्वं व्यपदेश्यत्वञ्चाभिमतम्। अन्यथा यदि तस्य तत्राहनि चतुर्दशीमात्रस्य तदुभयसम्मितमभविष्यत्तादा 'अवरावि" इत्यस्य "अपरा एव" इत्यर्थपरतां प्रदर्श्य प्रागुक्तस्य "चतुर्दश्येव" इत्यस्यासङ्कुचितस्यैव समर्थनं कृतं प्राप्स्यत्। परमत्र तु "प्रायश्चित्तादिविधावित्युक्तत्वात्" इत्यादिग्रन्थेन पूर्वोक्तस्य "चतुर्दश्येव" इत्यस्यैवार्थसङ्कोचः कृतो दृश्यते। तेनासन्दिग्धमवधार्यते यत् "अवरावि" इत्यनेन क्षीणचतुर्दशीदिने त्रयोदशीचतुर्दश्योर्द्वयोरेव व्यपदेश्यत्वं यत् पश्चात् सूचितं तस्यैव समर्थनं तच्चिकीर्षितम्। अत एव गौणमुख्यभेदात् मुख्यतया चतुर्दश्या एव व्यपदेशो युक्त इत्यभिप्रायेणोक्तत्वाद् वा" इति ग्रन्थे "मुख्यतया" इत्यस्य हेतुनिर्देशपरत्वं निर्वर्ण्य मुख्यत्वहेतुना चतुर्दशीमात्रस्य व्यपदेशार्हताया युक्तत्वे ग्रन्थकृद्विवक्षितत्वसाधनाय श्रीसागरानन्दसूरिणा यच्चेष्टितम् तद् हास्यास्पदमेव उक्तरीत्योभयव्यपदेशस्य समर्थन एव ग्रन्थकारव्यापारस्य सिद्धत्वात्।

किञ्च "गौणमुख्यभेदात् मुख्यतया" इत्यादिग्रन्थस्य "मुख्यतया चतुर्दश्या एव व्यपदेशो योग्यः" इत्यर्थे तात्पर्यं शक्यकल्पनं तदा स्याद् यद्येष चतुर्दश्या एव व्यपदेशसमर्थनाय निबद्धः स्यात्, परमेवन्नास्ति। अयन्तु "ता अवरविद्ध अवरावि" इति ग्रन्थस्थापिशब्देन सूचितस्यापर्वतिथिव्यपदेशस्य रक्षायै प्राङ्निर्दिष्टायाश्चतुर्दशीमात्रव्यपदेशोक्ते: कथञ्चिदुपपादनाय संग्रथितः। अतोऽस्य ग्रन्थस्यायमेवाशयो मान्यो यत् प्राक् चतुर्दशीमात्रस्य यो व्यपदेश उक्तः स चतुर्दशीमात्रस्य मुख्यताव्यपदेशपरो न तु त्रयोदशीनिषेधपरः। अर्थात् चतुर्दशीक्षयदिने त्रयोदशीचतुर्दश्योरुभयोरेव सत्त्वेन कस्याः गौणत्वं कस्याश्च मुख्यत्वम्? इति गवेषणायां चतुर्दश्या एव मुख्यत्वं पर्वरूपत्वान्न तु त्रयोदश्याः, तस्या अपर्वरूपतयाऽप्राधान्यात्। गवेषणापि सा ज्ञानावसरिकी, तद्दिने चतुर्दश्या मुख्यतानभ्युपगमे औदयिकचतुर्दश्याः पूर्वदिन इव क्षीणचतुर्दश्याः क्षयदिने आराधनाया अयोग्यत्वापत्तेः।

एवं यद्यपर्वतिथेरपि पर्वतिथिक्षयदिने सत्तासंज्ञयोर्लोपो न सह्यते विपश्चिज्जैनशास्त्राचार्यैस्तदा क्षीणोत्तरपर्वतिथिकाया अक्षीणायाः पर्वतिथेस्तयोर्लोपः टिप्पणेन निर्दिष्टे तदौदयिकीत्वदिने कथमिव तैः सोढुमिष्टो भवेत्? अतः पर्वानन्तरपर्वतिथेः क्षयस्थले एकस्मिन्नेव दिने पूर्वापरपर्वतिथ्योराराधनायां श्रीधर्मसागरप्रभृतिप्राचीनजैनशास्त्रसदाचारधुरन्धराणां सम्मतत्वं विज्ञेयम्। एतदर्थसमर्थकोऽपि तत्त्वतरङ्गिणीग्रन्थः स्पष्टमुपलभ्यत एव, तथाहि—

"नन्वेवं पौर्णमासीक्षये भवतामपि का गतिः?" इति खरतरप्रश्नस्य "अहो विचारचातुरी. यतस्तत्र चतुर्दश्यां द्वयोरपि विद्यमानत्वेन तस्या अप्याराधनं जातमेव" इत्युत्तरं ग्रन्थकृता कृतमस्ति, "अत्र चतुर्दश्यां द्वयोरपि विद्यमानत्वेन" इति विस्पष्टपदावलीं शृण्वन् को नाम ऋते प्रमत्ताद् एकदिने द्वयोस्तिथ्योः सत्तायाः "तस्या अप्याराधनं जातमेव" इति शब्दसंहतिं च शृण्वन् एकस्मिन् दिने द्वयोराराध्यतायाश्च जैनशास्त्रसम्मतत्वे सन्दिहानमनाः भविष्यति?

न च "चतुर्दश्यां द्वयोरपि विद्यमानत्वेन" इत्यस्य "टिप्पणानुसारेण द्वयोरपि विद्यमानत्वेन" इत्येतदर्थकतया न तद्वलेनैकत्र दिने द्वयोः पर्वतिथ्योः सत्तायास्तत्त्वतरङ्गिणीकृत्सम्मतत्वं समर्थनार्हमिति नोद्यम्, "इति" शब्दाध्याहारे विपरीतवासनाव्यतिरिक्तनिमित्तस्याभावात्, चतुर्दश्यां पूर्णिमामात्रसत्त्वस्याभिप्रेतत्वे टिप्पणापेक्षयाऽपि तदस्तित्वोपदर्शनस्यानावश्यकत्वात् ।

एवं "तयोः" इत्यनुक्त्वा "तस्याः" इति कथनेन चतुर्दशीदिने क्षीणपूर्णिमामात्रस्याराधनं सूच्यत इति वचनमपि बालप्रलापमात्रम्, "तस्या अपि" इत्येवम् "अपि" शब्द संवलितस्य "तस्या" इति शब्दस्य प्रयुक्तत्वात् । पूर्णिमामात्रस्याराधनावर्णनतात्पर्ये तु अपिशब्दोपादानस्यासङ्गत्यापत्तेः "चतुर्दश्यां द्वयोरपि विद्यमानत्वेन" इत्यादिना द्वयोस्सत्तासूचनस्यानर्थक्यापत्तेश्च ।

किञ्च "नन्वेवं पौर्णमासीक्षये भवतामपि का गतिः ?" इति वाक्येन "क्षीणायाः पौर्णमास्या आराधनोपपत्तिः कथम् ? इत्यस्यैव पृष्टतया तदनुसारेणोत्तरवाक्ये "तस्याः" इति कथनस्यैवौचित्यम् "तयोः" इति कथने तूत्तरस्य प्रश्नाननुरूपताऽऽपत्तिः ।

इदमप्यत्रावधेयं यच्चतुर्दशीदिने चतुर्दशीन्दूरीकृत्य पौर्णमासीमात्रस्यावस्थानं नाभिप्रेतं ग्रन्थकृतः किन्तु चतुर्दशीपौर्णमास्योर्द्वयोरेव । अन्यथा " चतुर्दश्यां द्वयोरपि विद्यमानत्वेन " इतिस्थाने " चतुर्दश्यां पौर्णमास्या एव विद्यमानत्वेन " इत्येवोक्तं भवेत् । अग्रेऽपि " यतस्त्रुटितत्वेन चतुर्दश्यां पौर्णमास्या वास्तव्येव स्थितिः " इति स्थाने "यतस्त्रुटितत्वेन चतुर्दश्यां पौणमास्या एव वास्तवी स्थितिः " इत्येव कथितं स्यात् ।

किञ्च क्षीणचतुर्दश्याः पौर्णमास्यामाराध्यतावादिनः खरतरस्य मतं निराकुर्वता तत्त्वतरङ्गिणीकृता खरतरो यदैवमाख्यातो यत् " चतुर्दशीपौर्णमासी चेत्युभे अप्याराध्यत्वेन सम्मते स्तस्तद्यदि भवदुक्तरीतिरा-

श्रीयते तर्हि पौर्णमास्येवाराधिता चतुर्दश्याश्चाराधनं दत्ताञ्जलीव भवेत्" तदा खरतरेण सोऽपि पृष्टो यत् "नन्वेवं पौर्णमासीक्षये भवतामपि का गतिः ?" इति।

अनेन खरतरप्रश्नेन स्पष्टमिदं प्रतीयते यत्तदानीं तपागच्छे पौर्णमास्यादिपर्वतिथिक्षयावसरे चतुर्दश्यामेव चतुर्दशीपौर्णमास्योराराधना प्रचलिताऽऽसीत्, न तु पौर्णमास्याश्चतुर्दश्याम्। अन्यथा ग्रन्थकृता तपागच्छपक्षानुसारेण पौर्णमास्यां क्षीणचतुर्दशीपौर्णमास्योरुभयोराराध्यताप्रतिषेधे तपागच्छीयैरपि चतुर्दश्यां तस्याः क्षीणपौर्णमास्याश्चाराधनं कथं स्वीकर्तुं शक्यते ? इत्यभिप्रायकस्य तत्प्रश्नस्यानुत्थानपराहतत्वमेव स्यात्।

उक्तखरतरप्रश्नस्योत्तरं ददता ग्रन्थकृता यदुक्तं तेन निगदितोऽर्थः सम्यक्स्फुट एव, तद्यथा—"अहो विचारचातुरी, यतस्तत्र चतुर्दश्यां द्वयोरपि विद्यमानत्वेन तस्या अप्याराधनं जातमेवेति जानताऽपि पुनर्नोद्यते। न च तत्रारोपिता सती पूर्णिमाऽऽराध्यते, यतस्त्रुटितत्वेन चतुर्दश्यां पौर्णमास्या वास्तव्येव स्थितिः, युक्तिस्तु तत्रोक्ता वक्ष्यते च क्षीणतिथिवृद्धतिथिसाधारणलक्षणावसरे इति। भवता तु त्रुटितचतुर्दशी पूर्णिमायां बुद्ध्याऽऽरोप्याराध्यते। तस्यां तद्भोगगन्धाभावेऽपि तत्त्वेन स्वीक्रियमाणत्वात्, आरोपस्तु मिथ्याज्ञानम्" इति खरतरं प्रत्याख्यात उत्तरग्रन्थः।

अत्रोत्तरकारभावेन ग्रन्थकारेण खरतरं प्रति निजाभिप्रायोऽयं प्रकाशितो यत् "न मया एकदिने द्वयोस्तिथ्योराराधनाया अनौचित्यमसम्भवत्वं वाऽऽश्रित्य भवदभिमताया: पौर्णमास्यां चतुर्दश्याराधनायाः निराकरणं क्रियते किन्तु पौर्णमासीदिने तस्या अभावेन। अतो मां यद् भवानुपालभते यत् "पौर्णमासीक्षये भवतामपि का गतिः ?" इति, तन्न युज्यते, मया चतुर्दशीदिने त्रुटितत्वेन विद्यमानाया एव पौर्णमास्या आराधनास्वीकारात् इति।

किञ्च "युक्तिस्तु तत्रोक्ता वक्ष्यते च क्षीणतिथिवृद्धतिथिसाधारणलक्षणावसरे" इत्येतेन वाक्येन चतुर्दश्यां पौर्णमास्याः वृत्तित्वे क्षीणतिथिवृद्धतिथिसाधारणलक्षणावसरे वक्ष्यमाणायाः युक्तेरपि मूलत्वमुक्तम्, सा च युक्तिः "संपुण्णत्ति अकाडं बुड्ढीए घिप्पई न पुव्वतिही। जंजाजंमि हु दिवसे समप्पई सा पमाणंति" इति सप्तदशगाथाया उत्तरार्धव्याख्यानप्रसङ्गे एवमुक्ता यत् "या तिथिर्यस्मिन् आदित्यादिवारलक्षणदिवसे समाप्यते स एव दिवसो वारलक्षणः प्रमाणमिति–तत्तिथित्वेनैव स्वीकार्यः, अत्र हु एवकारार्थे ज्ञातव्य इत्यर्थः। अतएव "क्षये पूर्वा तिथिर्ग्राह्या" तस्मिन्नेव दिवसे द्वयोरपि समाप्तत्वेन तस्या अपि समाप्तत्वात्" इति। अनेन ग्रन्थेन क्षयदिने क्षीणतिथिसत्तायाः समाप्तताहेतुकत्वमुद्घुष्य तद्दिने तस्या औदयिकीत्वकल्पनाया अनावश्यकत्वं स्पष्टमेव सूचितम्। अतः क्षयदिने क्षीणतिथेः सूर्योदयसमयादेन सम्बन्धकल्पनमशास्त्रीयमेव।

अत्रापि याया तिथिर्यस्मिन् आदित्यादिवारलक्षणदिवसे समाप्यते स एव दिवसो वारलक्षणः प्रमाणमिति–तत्तत्तिथित्वेन स्वीकार्यः इत्यनुक्त्वा 'या तिथिः............तत्तिथित्वेन' इत्युक्त्या एकदिने एकतिथेरेव सत्ता सूच्यते न द्वयोरिति श्रीसागरानन्दसूरिणा यत्कल्प्यते, तन्न युक्तम् "या या तिथिः.............तत्तत्तिथित्वेन' इत्युक्तेः यत्र दिने एकैव तिथिः समाप्यते तद्दिनसाधारण्यासम्भवेन तद्दिने तत्तिथित्वलाभस्यासम्भवात्, 'या तिथिः............तत्तिथित्वेन" इत्युक्तेस्तु यत्र दिने तिथिद्वयस्य समाप्तिः, यत्र च दिने एकस्या एव तिथेः समाप्तिस्तदुभयोरेव साधारण्यसम्भवेन दोषाभावात्। "तस्मिन्नेव दिवसे द्वयोरपि समाप्तत्वेन" इत्यग्रेतनेन वचनेन तत्कल्पनायाः विस्पष्टं कदर्थनाच्च।

अत्र प्रसङ्गे "किं किमप्यष्टम्या रहोवृत्त्या समर्पितं यन्नष्टाऽप्यष्टमी परावृत्त्याभिमन्यते, पाक्षिकेण च किमपराद्धं? यत्तस्य नामापि न

सह्यते" इति ग्रन्थघटकं "नष्टाऽप्यष्टमी परावृत्त्याभिमन्यते" इति भागं–नष्टा अपि अष्टमी, परावृत्त्याभिमन्यते–सप्तमीमपनीय मन्यते–इत्येतदर्थकतया व्याख्यातुं यत् श्रीसागरानन्दसूरिणा चेष्टितम्, तदतिचेष्टितम्, परावृत्त्येतिशब्दस्य अपनीयेत्यर्थकत्वासम्भवात्, तदर्थतात्पर्ये 'परावर्त्य' इति शब्दप्रयोगस्यैव युक्तत्वात्। अन्तर्भावितण्यर्थतायाश्च प्रमाणाभावेन वक्तुमशक्यत्वात्।

तर्हि तद्वाक्यस्य विशुद्धा व्याख्या कीदृशी? इति चेत्, श्रूयताम्। "परावृत्त्याभिमन्यते" इत्यत्र "परावृत्त्या अभिमन्यते" इति च्छेदः। "परावृत्त्या" इत्यस्य च परस्याः–अन्यस्याः, सप्तम्या इति यावत्। "वृत्त्या" स्थित्या। सहेति गम्यम्। अभिमन्यते–स्वीक्रियते। अथवा परस्मिन्—उत्तरस्मिन् दिवसे अवृत्त्या–सम्बन्धाभावेन। अर्थात् पूर्वदिन एव समाप्तत्वेन हेतुनाऽभिमन्यते इति। अयम्भावः–येन परदिनावर्तनहेतुना पूर्वदिने समाप्तत्वरूपनिमित्तेन नष्टामनौदयिकीमप्यष्टमीं पूर्वदिने मनुषे तस्य निमित्तस्य क्षीणचतुर्दश्यामपि निर्विशेषं सत्त्वेन ताञ्च न पूर्वदिने मनुषे, इति वैषम्यं कुतः कुरुषे? किमेवं कर्तुं प्राप्तवानसि कञ्चिदुत्कोचमष्टम्याः?

एकस्मिन् दिने द्वयोस्तिथ्योराराधनं न भवितुमर्हति इति श्रीसागरानन्दसूरिवचनं "किंच क्षीणपाक्षिकानुष्ठानं पौर्णमास्यामनुष्ठीयमानं किं पञ्चदश्यनुष्ठानं पाक्षिकानुष्ठानं वा व्यपदिश्यते? आद्ये पाक्षिकानुष्ठानविलोपापत्तिः। द्वितीये स्पष्टमेव मृषाभाषणम्, पञ्चदश्या एव चतुर्दशीत्वेन व्यपदिश्यमानत्वात्" इति ग्रन्थतोऽपि विरुद्धम्।

तथाहि तपागच्छपक्षपोषणे प्रवृत्तेन ग्रन्थकारेण पौर्णमास्यामनुष्ठीयमानस्य क्षीणपाक्षिकानुष्ठानस्य पञ्चदश्यनुष्ठानत्वव्यपदेशे यथा पाक्षिकानुष्ठानविलोपापत्तिः प्रदर्शिता तथा तस्य पाक्षिकानुष्ठानत्वव्यपदेशे पौर्णमास्यनुष्ठानविलोपापत्तिर्नोद्भाविता, तेन स्पष्टं ज्ञायते यत् पाक्षिकानुष्ठाने पौर्णमास्यनुष्ठानमन्तर्भवति, अतः क्षीणपौर्णमास्या–

श्चतुर्दश्यौदयिकीत्वदिने आराधनोपपादनानुरोधेन ततश्चतुर्दश्या अपसारणम् एकत्र दिने द्वयोस्तिथ्योराराधनाऽनौचित्यकल्पनं च नैव न्याय्यम् ।

किंच पञ्चमगाथाव्याख्यायां खरतराक्षेपं प्रतिक्षिपता "चतुर्दश्यां द्वयोरपि विद्यमानत्वेन तस्या अप्याराधनं जातमेव" इति यदुक्तं तत्र "तस्या अपि" इत्यत्र "अपि" शब्दोपन्यासेन चतुर्दश्या आराधनस्यापि निष्पन्नतायाः स्पष्टं सूचनात् । अष्टादशगाथाव्याख्यायाम् "एवं क्षीणतिथावपि कार्यद्वयमद्य कृतवानहमित्यादयो दृष्टान्ताः स्वयमूह्याः" इति वचनेन क्षीणपौर्णमास्यादिके चतुर्दशीदिने तदुभयाराधनात्मनः कार्यद्वयस्य कण्ठरवेण कथनाच्च कथिता श्रीसागरानन्दोक्तिर्विरुद्धैव ।

चतुर्दश्याः क्षये पञ्चाङ्गानुसारेण त्रयोदश्या औदयिकीत्वदिने चतुर्दश्येवैका तिथिर्नतु त्रयोदशी इति यत् श्रीसागरानन्दसूरिणा कथ्यते तत् तत्त्वतरङ्गिण्याः पञ्चमगाथाव्याख्यान्तर्गतात् "नच क्षीणे पाक्षिके त्रयोदश्यां चतुर्दशीज्ञानमारोपरूपं भविष्यतीति वाच्यम् , तत्रारोपलक्षणस्यासम्भवात् , नहि घटपटवति भूतले घटपटौ स्त इति ज्ञानं कनकरत्नमयकुण्डले ( वा ) कनकरत्नज्ञानं भ्रान्तं भवितुमर्हति, एवमेकस्मिन्नेव रव्यादिवारलक्षणे वासरे द्वयोरपि तिथ्योः समाप्तत्वेन विद्यमानत्वात् कौतस्कुत्यमारोपज्ञानम् ?" इति ग्रन्थादपि विरुद्धम् । यतो हि यदि त्रयोदशीदिने क्षीणचतुर्दशीमात्रस्य सत्त्वमभिमतं भवेत्तदा घटघटज्ञानस्येव तद्दिने चतुर्दशीज्ञानस्यानारोपत्वं वर्ण्येत, नापि "द्वयोरपि तिथ्योः समाप्ततया विद्यमानत्वात्" इति वचनतः स्पष्टमेव द्वयोः सत्त्वं सूच्येत ।

खरतरसम्मतायाः पौर्णमास्यां चतुर्दश्यनुष्ठेयतायाः निराकरणपूर्वकं स्वमते क्षीणपौर्णमास्याश्चतुर्दशीदिने समाराध्यताप्रदर्शनानन्तरं तत्त्वतरङ्गिणीकारेणात्रैव प्रकरणे "अथानन्तर्यासु द्वित्र्यादिकल्याणकतिथिषु किमेवमङ्गीक्रियते?" इति खरतरप्रश्नः समाधातुमुत्थापितः । अयं च प्रश्नस्तदैवोत्थातुमर्हति यदि पूर्वं ग्रन्थकारेण चतुर्दशीदिने चतुर्दशीक्षीणपौर्णमास्योरु-

भयोरेवाराधनं सूचितं स्यात् । यतः प्रश्नस्यायमाशयः स्पष्टं प्रतिभाति यद् यथा पौर्णमासीक्षये चतुर्दशीदिने चतुर्दशीपौर्णमास्योरुभयोराराधनं मन्यते तथैव किम् आनन्तर्येणागतासु द्वित्रादिकल्याणकतिथिषु चरमायाः क्षयेऽपि मन्यते ? यद्येवम्, तदाऽनन्तरदिनमादाय भविष्यद्वर्षकल्याणकतिथिद्दिनञ्चादाय तपःसमाचरणमनावश्यकम् । यदि नैवम्, तदा पौर्णमासीक्षयस्थले चतुर्दशीदिने द्वयोराराधनास्वीकरणम्, कल्याणकतिथ्यनन्तरकल्याणकतिथिक्षये च तत्प्रकारेणाराधनाया अस्वीकरणम् इति वैषम्यं निर्निमित्तत्वादनुचितम्, यदि पुनः श्रीसागरानन्दसूरिमतानुसारेण क्षीणपौर्णमास्याश्चतुर्दशीदिने चतुर्दश्याश्च त्रयोदशीदिने आराधनमेव ग्रन्थकृत्सूचितं स्वीक्रियेत तदाऽऽख्यातस्य खरतरप्रश्नस्योत्थानं नैव घटेत । तेन व्यक्तमेव भवत्येतद् यत् पौर्णमासीक्षये चतुर्दशीदिने द्वयोरेवाराधनं ग्रन्थकृतः सम्मतम् ।

उक्तखरतरप्रश्नस्य "अग्रेतनकल्याणकतिथिपाते प्राचीनकल्याणकतिथौ द्वयोरपि विद्यमानत्वादिष्टापत्तिरेवोत्तरम् ।..........कल्याणकाराधको हि प्रायस्तपोविशेषकरणाभिग्रही भवति, सच द्विधा निरन्तरतपश्चिकीर्षुः सान्तरतपश्चिकीर्षुश्च, तत्राद्य एकस्मिन् दिने द्वयोरपि कल्याणकतिथ्योर्विद्यमानत्वेन तदाराधकोऽपि सन्ननन्तरोत्तरदिनमादायैव तपःपूरकः भवति नान्यथा, यथा पूर्णिमापाते चातुर्मासिकषष्ठतपोऽभिग्रही अपरदिनमादायैव तपःपूरकः, द्वितीयस्तु भविष्यद्वर्षतत्कल्याणकतिथियुक्तं दिनमादायैवेति न किञ्चिदनुपपन्नम्" इति ग्रन्थेनोत्तरं कुर्वता ग्रन्थकृताऽसन्दिग्धमेवोक्तं यद् यथा पूर्णिमापाते चतुर्दशीदिने चतुर्दशीपूर्णिमयोरुभयोराराधको भवन्नपि पुमान् चातुर्मासिकं षष्ठं तपः दिनान्तरमादायैव पूरयति तथैवोत्तरकल्याणकतिथिपाते पूर्वकल्याणकदिने द्वयोः कल्याणकयोराराधकः सन्नपि नरः स्वं तपोऽभिग्रहं दिनान्तरग्रहणेनैव पूरयति, प्रकारान्तरेण तत्पूरणासम्भवात् ।

अस्योत्तरग्रन्थस्याधारेण श्रीसागरानन्दसूरिः पर्वतिथेस्तपःपौषधादि-

नाऽऽराध्यतया एकदिने द्वयोः पर्वतिथ्योराराधनं न भवितुमर्हति, कल्याणकतिथेस्तपोमात्रेणाराध्यतायां सत्यामपि एकदिवसीयतपसा द्वयोराराधनं न भवतीति तद्द्वयाराधनाय दिनान्तरं गृह्यते इत्याद्यर्थं कथं वर्णयति ? तादृशार्थकथनस्य को वाऽवसरः ? इत्यादिकन्तु स एव जानाति।

किञ्च पूर्णिमायाः पाते तस्याश्चतुर्दश्यां चतुर्दश्याश्च त्रयोदश्यामाराधनायाः श्रीसागरानन्दसूरिकथनानुसारेण स्वीकारे प्राप्तसूर्योदयायास्तिथेस्सूर्योदयदिन एव जैनशास्त्रीयाया आराधनाऽऽज्ञायाः भङ्गः, तादृशतिथेः सूर्योदयमवगणय्य आराधनेऽनवस्था पूर्वापरदिनयोरव्यवस्थारूपा, औदयिकचतुर्दश्यास्तदनौदयिकीत्वदिने जैनशास्त्रानादिष्टस्य तदाराधनस्य जैनशास्त्रादिष्टत्वमतेर्मिथ्यात्वम्, तादृशतिथेः शास्त्रोक्ते-तदाराधनादिनेऽनाराधनेन तद्विराधनेति चत्वारो दोषाः "उदयं मि जा तिही, सापमाणमिअरीइ कीरमाणीए। आणाभंगणवत्था मिच्छत्तविराहणं पावे" इति शास्त्रानुसारेण प्रसभमापतन्तो न कथमपि वारयितुं शक्यन्ते।

"क्षये पूर्वा तिथिः कार्या" इत्यादिशास्त्रेण "उदयं मि जा तिही" इत्यादिशास्त्रस्यापोदिततया नोक्तदोषावसर इति श्रीसागरानन्दसूरिसम्भावना निराधारैव, "क्षये पूर्वा" इत्यादिशास्त्रस्य क्षीणतिथ्यादीनामाराधनाव्यवस्थापकस्याक्षीणतिथ्यादिविषये ताटस्थ्यात् अक्षीणतिथ्यादिविषये "उदयं मि जा तिही" इत्यादिशास्त्रस्य निरङ्कुशादेशत्वात्।

न च "क्षये पूर्वा" इत्यादिवचसा क्षीणतिथेरौदयिकीत्वव्यवस्थापने द्वयोश्च तिथ्योरेकत्र दिने औदयिकीत्वासम्भवेन पूर्णिमाक्षयदिने पञ्चाङ्गानुसारेण औदयिक्या अपि चतुर्दश्याः क्षीणत्वस्य प्राप्तत्वेन तद्दिवसेऽपि 'क्षये पूर्वा" इत्यादेस्तत्राप्रवृत्त्या नैवोक्तदोषाः प्राप्तपदाः भवितुमीशते इति वाच्यम्, पञ्चाङ्गे औदयिकीत्वेन निर्दिष्टतिथीनामाराधनायाः स्वत उपपन्नतया कथन्ताऽऽकाङ्क्षाप्रसाभावात् तत्रानौद-

यिकीत्वेनोक्तानां तिथीनामेवाराधनायाः कथन्ताऽऽकाङ्क्षाकवलितत्वेन तदाराधनोपपादकतायाः एवोक्तवचसो न्याय्यतया औदयिकतिथीनां तन्मुख्यकाले आराधनासंरक्षणेन सहैव तस्यानौदयिकतिथ्याराधनाव्यवस्थापकतायाः स्वीकर्तुमुचितत्वात् । न चैतदसम्भवीति शङ्कनीयम्, अक्षीणवृद्धतिथीनामौदयिकीत्वस्येव क्षीणवृद्धतिथीनां समाप्तत्वस्याराधनीयतायां प्रयोजकत्वप्रतिपादनपरतायाः स्वीकारेणाक्षीणतिथ्यादीनां तन्मुख्यकाले आराधनारक्षणस्य क्षीणतिथ्यादीनामाराधनाव्यवस्थापनस्य चोभयस्यैव सम्भवात् ।

न च अक्षीणावृद्धतिथीनामाराधनीयताप्रयोजकत्वस्यौदयिकीत्वे क्षीणवृद्धतिथीनामाराधनीयताप्रयोजकत्वस्य समाप्तत्वे स्वीकारे गौरवात् तदपेक्षया लाघवेन सर्वपर्वतिथीनामाराधनीयताप्रयोजकत्वस्यौदयिकीत्व एव स्वीकार्यतौचित्यात् क्षीणतिथीनामाराधनार्हतासम्पत्तये तासामौदयिकीकरणस्यावश्यकतया तदनुरोधेन तत्पूर्वापर्वतिथेः क्षयाभ्युपगम एव गरीयानित्युद्गिरणीयम्, औदयिकीत्वस्य सूर्योदयस्पर्शलक्षणस्य सर्वपर्वतिथ्यसाधारणतया तस्य सर्वतदाराधनीयताप्रयोजकत्वासम्भवात्, वस्तुतोऽनौदयिक्याः शास्त्रसहस्रेणापि औदयिकीकरणासम्भवात्, वस्तुस्थित्यनुरोधेन प्रयोजककल्पनायां लाघवलोभसंवरणस्यैव युक्तत्वात् । तस्य सर्वथाऽशक्यत्वे तु सर्वपर्वतिथिसाधारणतया समाप्तत्वस्यैव सर्वतदाराध्यताप्रयोजकत्वकल्पनस्य कमनीयत्वात्। तत्त्वतरङ्गिणीकारेण 'जं जा जं मि हु दिवसे समप्पई सा पमाणंति" इति सप्तदशगाथोत्तरार्धेन "अथ तिथीनां वृद्धौ हानौ च का तिथिः स्वीकार्येत्यत्रोभयोः साधारणं लक्षणमुत्तरार्धेनाह–'जं जा जं मि' त्ति यद्–यस्माद् या–तिथिर्यस्मिन् आदित्यादिवारलक्षणदिवसे समाप्यते स एव दिवसो वारलक्षणः प्रमाणमिति-तत्तिथित्वेनैव स्वीकार्यः, अत्र हु एवकारार्थे ज्ञातव्य इत्यर्थः । अत एव 'क्षये पूर्वा तिथिर्ग्राह्या' तस्मिन्नेव दिवसे द्वयोरपि समाप्तत्वात्" इति तद्व्याख्यानात्मकग्रन्थेन च तथैव सूचनात् ।

न च समाप्तत्वस्य सर्वपर्वतिथ्याराध्यताप्रयोजकत्वस्वीकारे सूर्योदयलक्षणौदयिकीत्वस्य तत्त्वबोधकानां "तिथिश्च प्रातः प्रत्याख्यानवेलायाम्" "चाउम्मासि..........ताओ तिहिओ जासिं, उदेइ सूरो", "पूजापच्चक्खाणं.....जीए उदेइ सूरो, तीइ तिहीए उ कायव्वं" इत्यादिशास्त्रवचनानामनादरप्रसङ्ग इति शङ्क्यम्, सूर्योदयलक्षणौदयिकीत्वस्य पर्वतिथ्याराध्यताप्रयोजकत्वप्रतिपादनेन तेषां निष्पिपादयिषितस्य औदयिकपर्वतिथीनामनौदयिकीत्वदिने आराधनायां लोकप्रवृत्तिपरिहाररूपलक्ष्यस्याक्षुण्णत्वेन तेषां सम्मानस्य सुरक्षितत्वात् ।

अत्रेदमवधेयम्--

श्रीसागरानन्दसूरिणा "उदयं मि जा तिही सा पमाणमिअरीइ कीरमाणीए । आणाभंगणवत्था मिच्छत्त विराहणं पावे" इति शास्त्रस्योत्सर्गत्वं "क्षये पूर्वा तिथिः कार्या" इति शास्त्रस्य चापवादत्वं ब्रुवता सूर्योदयलक्षणौदयिकीत्वस्य अक्षीणतिथीनामेवाराध्यताप्रयोजकत्वं नान्यासामिति स्वीकार्यमेव । अन्यथा सर्वपर्वतिथीनामाराध्यताप्रयोजकत्वस्य सूर्योदयस्पर्श एव स्वीकारे तयोरुत्सर्गापवादभावस्वीकारस्यार्थ एव कः स्यात् ? किञ्च 'क्षये पूर्वा" इत्यादिवचसः औदयिकीत्वसम्पादनेन क्षीणतिथेराराध्यतोपपादकतास्वीकारे "उदयं मि जा" इत्यादिशास्त्रस्य क्षीणक्षीणोत्तरपर्वकेतरपर्वतिथिषु सङ्कोचः कर्तव्यो भवत्यतः समाप्तत्वस्य क्षीणपर्वतिथीनां सर्वपर्वतिथीनां वाऽऽराध्यताप्रयोजकत्वप्रतिपादनपरत्वं तद्वचसः स्वीकृत्य क्षीणेतरपर्वतिथिषु सङ्कोच एव लाघवान्मान्यः ।

इदमप्यत्र विमर्शमर्हति--

यत् "क्षये पूर्वा" इत्यादिप्रघोषकृतो दृष्टौ टिप्पणायत्तैव तिथेः क्षयप्राप्तिरासीत् । अत उक्तप्रघोषस्य टिप्पणे तिथेः पर्वतिथेर्वा क्षये प्राप्ते पूर्वा तिथिः कार्या—इत्येतदर्थस्य तद्विवक्षितत्वं प्रत्येतव्यम् । तथा चैतस्य वचसः क्षीणायाः पर्वानन्तरपर्वतिथेरौदयिकीत्वबोधने श्रीसागरानन्दसूरिमतानुसारेण पूर्वपर्वतिथेरनौदयिकीत्वे प्राप्ते तस्या औदयिकीत्वव्यव-

स्थापने तस्य वचसः प्रवृत्तिः कथं स्यात्? टिप्पणे दृष्टक्षयाया एव तिथेरभिप्रायेण तस्य प्रादुर्भूतत्वात्। क्षीणपर्वतः प्राक्तन्याः पर्वतिथेरौदयिकीत्वस्यावश्यरक्षणीतया तदनौदयिकीत्वापादनपूर्वकतदौदयिकीत्वविधाने तात्पर्यकल्पनस्य "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इतिन्यायेनानुचिततया तद्वचसः पूर्वौदयिकतिथेरनौदयिकीत्वापादनापर्यवसायिन्येवार्थे तात्पर्यस्वीकारस्य ज्यायस्त्वात्।

इत्थञ्चैतावता विचारेण निर्विवादमिदं सिद्ध्यति यत् "क्षये पूर्वा तिथिः कार्या" इति वचनस्य पञ्चाङ्गेन क्षीणतया निर्दिष्टायाः पर्वतिथेः सूर्योदयलक्षणौदयिकीत्वव्यवस्थापनस्य पञ्चाङ्गोदितौदयिकतिथ्यपकर्षफलकस्य द्वारा तदाराधनोपपादकता जैनशास्त्राणां प्राचीनजैनसदाचाराणाञ्च प्रतिकूलतया कथितानेकानर्थहेतुतया च नोचितेति।

द्वितीयतृतीयपक्षौ तु समप्रायौ निर्विवादं शास्त्रयुक्तिसदाचारसम्मतौ चेति तदवलम्बनेन "क्षये पूर्वा तिथिः कार्या" इति वचनस्य क्षीणतिथ्याराधनोपपादकतासमादरे दोषाभावः! अत एव तथैव श्रीरामचन्द्रसूरिणा तद्वचसः क्षीणपर्वतिथ्याराधनाव्यवस्थापकत्वमङ्गीकृतम्। एतत्पक्षानुकूलं तद्व्याख्यानञ्चेत्थम्—

क्षये—तिथेः पर्वतिथेर्वा सूर्योदयस्पर्शराहित्यलक्षणे क्षये पञ्चाङ्गेन प्राप्ते, पूर्वा-स्वपूर्वसूर्योदयारब्धदिवसीया स्वसमाप्तिशालिदिवसीयेति यावत्, तिथिः, कार्या—आराधनावती कार्येति। एवञ्च पर्वतितिथीनामाराधनाविधायकस्य, तत्तत्तिथ्यौदयिकीत्वदिने तत्तत्तिथ्याराधनाङ्गताबोधकस्य क्षीणतिथ्याराधनाव्यवस्थापकस्य च वचनस्य परस्परैकवाक्यतया सर्वपर्वतिथीनां स्वसमाप्तिसम्बन्धिनि वासरे आराधनाऽऽदेशस्य जैनशास्त्रप्रतिपाद्यता सिध्यति।

अत्र प्रसङ्गे श्रीरामचन्द्रसूरिसमुक्तसिद्धान्ते शिथिलप्रेम्णा श्रीसागरानन्दसूरिणा "क्षये पूर्वा तिथिः कार्या" इति शास्त्रस्याराधनाविषयकत्वं यद् आराधनायाः प्रकारान्तरतः प्राप्तत्वहेतुनाऽपनोदितन्तदौचि-

त्यत्रिवर्जितम्, औदयिकीनामेव पर्वतिथीनामाराधनाविधाने जैनशास्त्र-तात्पर्यं विपर्यस्यतां जनानां क्षीणतिथ्याराधनायाः प्रकारान्तरतोऽप्राप्ततया तदपेक्षयैव आराधनाविधायकत्वस्य श्रीरामचन्द्रसूरिण कथितत्वात्। वस्तु-दृष्ट्या तु क्षीणपर्वतिथिसमाप्तिसम्बन्धिदिनस्य प्रकारान्तरतोऽप्राप्तस्य क्षीणतिथ्याराधनाङ्गभावस्य विधायकताया एव तेनापि स्वीकारात्। "क्षये पूर्वा तिथिः कार्या" अगर "क्षये पूर्वा तिथिर्ग्राह्या" ए आज्ञा जे पर्वतिथि उदयतिथिरूपे प्राप्त थतीज न होय ते वी पर्वतिथिनी मान्यता आराधना नो दिवस नक्की करवाने माटेज छे" इत्येवं गुर्जरभाषा-निबद्धे स्वपक्षस्थापने स्पष्टमेव तेनाभिधानात्।

एवञ्चोक्तरीत्या क्षीणतिथीनामाराधनायास्तासामौदयिकीत्वकल्पनं विनाप्युपपन्नतया पर्वानन्तरपर्वतिथेः क्षयस्थले च एकस्मिन्नेव दिने क्षीणाक्षीणयोरुभयोः पर्वतिथ्योराराधनायाः सम्भवतया क्षीणपर्वतिथेः पूर्वस्याः पूर्वतरायाः वाऽपर्वतिथेः क्षयकल्पनमनावश्यकमसङ्गतञ्चेति।

अत्रैव प्रसङ्गे श्रीसागरानन्दसूरिणा—रामचन्द्रसूरिः पर्वतिथेः क्षये एकमासे एकादश पर्वतिथीरेव स्वीकरोति वृद्धौ च त्रयोदश पर्वतिथी-रङ्गीकरोत्यतस्तन्मते "क्षये पूर्वा" इत्यादिप्रघोषस्य नैरर्थक्यमापद्यते, पर्वतिथीनां नियमेन द्वादशसंख्याकत्वस्वीकार एव तत्प्रघोषस्योत्थान-सम्भवादिति यदिदमुक्तम्. तद् वस्तुनो विस्पष्ट एवापलापः। क्षीणा-यास्तिथेर्लोपस्य वृद्धायास्तिथेः सूर्योदयभेदेन भेदस्य च श्रीरामचन्द्रसू-रिणाऽनभ्युपगमात्, किन्तु क्षीणायाः पर्वतिथेः सूर्योदयस्पर्शं विनापि स्वरूपसत्ताया आराध्यतायाश्च वृद्धायास्तिथेर्दिनद्वयेऽभिन्नताया उत्तरदिन-मात्र आराध्यतायाश्च सुस्पष्टमुद्घोषणात्।

ननु श्रीहीरप्रश्नस्य द्वात्रिंशपत्रगते "पूर्णिमायाश्च त्रुटितायां त्रयो-दशीचतुर्दश्योः क्रियते, विस्मृतौ तु प्रतिपद्यपि" इति ग्रन्थे द्विवचना-न्तत्रयोदशीचतुर्दशीशब्दोल्लेखेन पूर्णिमाक्षये त्रयोदश्याः क्षयः सूच्यते। अन्यथा चतुर्दश्यां पाक्षिकपूर्णिमयोर्द्वयोः सन्निवेशस्याभिप्रेतत्वे

एकवचनान्तचतुर्दशीशब्दोल्लेख एव क्रियेतेति चेन्न, पूर्णिमाया अक्षयदशायां पूर्णिमायां समाप्यमानस्य षष्ठतपस एव पूर्णिमायाः क्षयदशायां कर्तव्यताकथन्तायाः प्रष्टृजिज्ञास्यताऽभिप्रायेण पूर्णिमाक्षयप्रसङ्गे त्रयोदश्यामारभ्य चतुर्दश्यां सुसूचयिषितायास्तत्समाप्तेर्द्विवचननिर्देशं विना सूचनाया असम्भवात्। अन्यथा "त्रयोदश्यां विस्मृतौ प्रतिपद्यपि" इत्युत्तरग्रन्थोऽसङ्गतः स्यात्, प्रतिपदि पूर्णिमायाः लेशतोऽपि संसर्गाभावेन तत्र तदाराधनोपदेशासम्भवात्।

ननु सूर्यप्रज्ञप्ति-ज्योतिष्करण्डकादिशास्त्रप्रामाण्येन युगान्ते आषाढवृद्धिप्रसङ्गे द्वितीयाषाढपूर्णिमायाः क्षयस्यावश्यकतया तस्य वास्तविकत्वाभ्युपगमे "अभिवर्द्धितसंवत्सरे यदाऽधिकमासो भवति तदाऽऽषाढपूर्णिमातो विंशतौ रात्रिषु गतासु वदेत्। 'यद् वयं वसामः' इत्यर्थके "अभिवड्ढितसंवच्छरे जत्थ अहिअमासो पडति, तो आसाढपुण्णिमाओ वीसतिराते गते भणंति ठियामो त्ति" इति निशीथचूर्णिवचने आषाढपूर्णिमोपादानं न युक्तमिति चेन्न, तिथिक्षयस्य तिथेरत्यन्ताभावात्मकत्वात् प्रत्युत क्षीणत्वेन निर्दिष्टायाः पर्वतिथेः वस्तुतोऽनौदयिकीत्वेऽपि आराधनाद्यनुरोधेन प्रधानभावेनास्तित्वव्यपदेशयोः स्वीकारेण कथिताषाढपूर्णिमोपादानस्य निरुपद्रवत्वात्।

टिप्पणोक्तस्याषाढपूर्णिमाक्षयस्य परमार्थभावेनाङ्गीकारे परमते तद्दिने चतुर्दश्या अप्यवश्यं स्वीकार्यतया पर्वतिथितया उदयकालस्पर्शितया च तदुपादानस्यैवोचिततरत्वेन तदुपेक्षा निर्बीजा स्यादिति यत् श्रीसागरानन्दसूरिणोद्गीर्णम्, तन्न युक्तम्, चतुर्दश्याः निर्देशे तामादायैव तिथिगणनस्य प्रसक्त्या वर्षावासारम्भतिथेः पञ्चाशत्तमतिथौ पर्युषणाऽवतारणानियमस्यासङ्गत्यापत्तेः। अत एव तद्दिने चतुर्दशीपौर्णमास्योर्द्वयोरेव परमते सत्तया तदुभयविज्ञापनमेव कर्तव्यमासीत्, किन्तु तथा न कृतम्, तेन ज्ञायते यत् तद्दिने पूर्णिमाया एव सत्त्वं शास्त्रसम्मतमित्यपि तदीयोत्प्रेक्षणम् रमणीयम्, उक्तवचनो युगान्तीयवृद्धि-

तीयाषाढ़पूर्णिमादिनस्य स्वरूपसाकल्यपरिचयप्रदित्सयाऽप्रवृत्तत्वात् । तथाप्रवृत्तत्वेव चतुर्दश्यनिर्देशेन तदभावानुमानसम्भवात् ।

चतुर्थप्रकरेण क्षीणादिपर्वतिथेराराध्यतामुपपादयन्तस्तावदेवं ब्रुवन्ति-अष्टम्यादेर्यत्र दिने क्षयः अर्थात् सूर्योदयोत्तरप्रवृत्तिपूर्विका निवृत्तिः टिप्पणतः प्राप्यते तत्र दिने सूर्योदयकालिक्यां सप्तम्यादावेव "क्षये पूर्वा तिथिः कार्या" इति शास्त्रमपूर्वविधिमर्यादयाऽष्टमीत्वादेर्व्यवस्थापनेन क्षीणामष्टम्यादितिथिमौदयिकीं विदधदाराधनायोग्यां तां करोति । न च सप्तमीत्वाष्टमीत्वाद्योर्विरुद्धयोरेकत्र समावेशोऽनुचित इति शङ्क्यम्, जैनागमेषु परस्परप्रतिकूलप्रतीतधर्माणामप्यपेक्षाभेदेनैकनिष्ठतायाः सम्भवत्स्वीकारतायाः प्रतिपादिततया एकस्यां तिथावाराधनानिमित्तापेक्षयाऽष्टमीत्वादेस्तदितरनिमित्तापेक्षया च सप्तमीत्वादेः समावेशस्वीकृतेरनौचित्याभावात् ।

नचाष्टमीत्वादीनामाराधनानिमित्ताद्यपेक्षत्वस्य कल्पनैकमूलकतया प्रामाणिकप्रणयास्पदता दुरासदेति सन्देहनीयम्, आर्हतप्रजाजनेषु कस्याप्यविप्रतिपन्नप्रामाण्यया श्रीधर्मसागरप्रणीततत्त्वतरङ्गिण्या तादृशार्थस्य वर्णनात् । तद् यथा—"नन्वौदयिकतिथिस्वीकारान्यतिथितिरस्कारप्रवणयोरावयोः कथं त्रयोदश्या अपि चतुर्दशीत्वेन स्वीकारः ? तत्र त्रयोदशीति व्यपदेशस्याप्यसम्भवात्, किन्तु प्रायश्चित्तादिविधौ चतुर्दश्येति व्यपदिश्यमानत्वात्" इति । त्रयोदशीत्वचतुर्दशीत्वयोः परस्परविरुद्धतया त्रयोदश्याश्चतुर्दशीत्वस्वीकारो नोचित इति शङ्काऽभिप्रायः । तस्याः प्रायश्चित्ताद्यपेक्षया चतुर्दशीत्वं स्वीक्रियते, तदपेक्षया च न तस्यास्त्रयोदशीत्वं किन्तु चतुर्दशीत्वमेव । एकापेक्षयैव तयोर्विरोधः नत्वपेक्षाभेदेनापीति च समाधानाभिसन्धिः । स च "प्रायश्चित्तादिविधौ चतुर्दश्येव" इत्यत्र 'प्रायश्चित्तादिविधौ' इति शब्दोपादानेन स्पष्टमेव प्रकाशितः । अतः क्षीणाष्टम्याः दिने सूर्योदयकालिकतिथ्यामष्टमीत्वाभ्युपगतये ततः सप्तमीत्वनिवृत्तेरङ्गीकारस्यावश्यकतया पर्वतिथेः क्षया-

भावः पूर्वापर्वतिथेः क्षयश्चोक्तवचसा बोधितो भवतीति भावः परकीयभ्रमसम्भव एव।

एवं पर्वानन्तरपर्वरूपायाः पूर्णिमाया अमावास्यायाः वा यत्र दिने क्षयः तद्दिने सूर्योदयकालिक्यां चतुर्दश्यामेवोक्तशास्त्रानुसारेण पूर्णिमात्वममावास्यात्वं वा व्यवतिष्ठते, तत्रापि तदर्थं चतुर्दशीत्वनिवृत्तिर्नावश्यकी, एकस्यामेव तिथौ पूर्णिमाद्याराधनापेक्षया पूर्णिमात्वादेश्चतुर्दश्याराधनानिमित्तापेक्षयेतरनिमित्तापेक्षया च चतुर्दशीत्वस्य वर्तनोपपत्तेः। अतस्तत्रापि टिप्पणतश्चतुर्दशीमति सूर्योदयकाले पूर्णिमादिस्वीकारे ततश्चतुर्दशीनिवृत्तेः टिप्पणतस्त्रयोदशीमति सूर्योदयकाले चतुर्दशीस्वीकृतेश्चानावश्यकतया टिप्पणे पूर्णिमादेः क्षयनिर्देशे त्रयोदश्या एव सूर्योदयकालसंसर्गित्वरूपं क्षीणत्वमभ्युपेयमित्यपि मतिः परकीया विभ्रान्तिरेव।

एवमष्टम्यादितिथीनां यदा वृद्धिः अर्थाद् दिनद्वये सूर्योदयसामयिकत्वं टिप्पणादुपलभ्यते तदा "वृद्धौ कार्या तथोत्तरा" इति शास्त्रं नियमविधिमर्यादया उत्तरस्मिन्नेव दिनेऽष्टम्यादेरौदयिकीत्वमष्टमीत्वं वा व्यवस्थापयति। अर्थाद् अभिवृद्धाऽष्टम्यादिः आराधनाऽपेक्षया उत्तरस्मिन्नेव दिने औदयिकी अष्टम्यादिरूपा वेत्यवबोधयति। अन्यथैकतिथ्याराधनायाः एकस्मिन्नेव दिने शास्त्रपरम्पराप्राप्तकर्तव्यताकतया तादृशतिथ्याराधनाया पाक्षिकत्वस्यापरिहार्यत्वापत्तेः। इत्थं च प्रोक्तं वचः पर्वतिथिवृद्धिप्रतिषेधं प्रत्याययत् अपर्वतिथिवृद्धिं विज्ञापयतीति परप्रज्ञा परस्यैव प्रिया, निर्मर्यादमुद्गताया असत्यास्तस्याः शाब्दमर्यादया शास्त्रान्तरङ्गविज्ञानां प्रीतिपात्रताया असम्भवात्।

"क्षये पूर्वा" इत्यादिसम्पूर्णस्य पूर्वपादद्वयात्मकस्य वचसो व्याख्यानं चेत्थम्–क्षये:–तिथे. पर्वतिथेर्वा क्षये टिप्पणतः ज्ञाते, पूर्वा तिथिः-सप्तम्यादिरूपौदयिकी तिथिः, कार्या-अष्टम्यादिभावेन आराधनार्थं ग्राह्या, इति। तथा वृद्धौ–एकस्यास्तिथेर्दिनद्वये सूर्योदयकालिकत्वे च, तथाशब्दस्यात्र चार्थत्वात्। उत्तरा–उत्तरदिनवृत्तित्वविशिष्टैव तिथिः। अथवा–वृद्धौ-उत्तरा-

तिथिः—उत्तरदिनवृत्तित्वविशिष्टैवतिथिः, तथाशब्दस्य तिथिपरामर्शकत्वात् कार्या-आराधनाऽपेक्षया औदयिकाष्टम्यादिरूपा मान्या, अर्थात् औदयिकाष्टम्यादिभावेनाराधनार्थमुपादेयेति । अमुमेव पक्षमादाय "क्षये पूर्वा" इत्यादिवचो व्याकुर्वाणो विभाति मध्यस्थः ।

पञ्चमप्रकारप्रणयिनः पुनरेवं कथयन्ति—यत् "क्षये पूर्वा तिथिः कार्या" इति वचनं सप्तम्यादेः क्षीणाष्टम्यादिप्रातिनिध्येनाराध्यतां प्रतिपादयत् क्षीणपर्वतिथ्याराधनामुपपादयति । एतत्पक्षप्रतिपन्नं तद्वचोव्याख्यानञ्चेत्थम्:—क्षये—अष्टम्यादिरूपायाः पर्वतिथेः क्षये दृष्टे सति, पूर्वा-अष्टम्यादिरूपक्षीणपर्वतिथितः पूर्ववर्तिनी सप्तम्यादिरूपा तिथिः, तिथिः-क्षीणाष्टम्यादिरूपपर्वतिथिप्रतिनिधिः, कार्या । अथवा क्षये सति पूर्वा तिथि क्षीणपर्वतिथिप्रतिनिधिभावेन 'कार्या' आराध्यत्वेनोपादेयेति ।

न चोक्तरीत्या पूर्वतिथेरेव क्षीणतिथिस्थाने आराधनाङ्गीकारे तदाराधनायाः क्षीणाष्टम्यादिसम्बन्धिताव्यपदेशो न स्यादिति शङ्कनीयम्, प्रतिनिधिसम्बन्धिनि प्रतिनिधित्वनिरूपकसम्बन्धिताव्यवहारस्य लोक इष्टत्वात् । राजप्रतिनिधिसम्माननावमाननयोः राजकीयतया राज्ञा लोकेन च स्वीकारस्य सर्वसुविदितत्वात् ।

इमौ चतुर्थपञ्चमपक्षौ धर्माङ्गतिथ्यादिनिर्णयाय श्रीजैनसङ्घेन प्रमाणतया स्वीकृते प्रचलितपञ्चाङ्गे श्रीजैनशास्त्रजाते च प्रामाण्यापायपङ्काप्रतिक्षेपकतया प्रथमपक्षीयपर्वलोपादिदोषासम्पादकतया च न निन्दामर्हतः ।

अथ 'वृद्धौ कार्या तथोत्तरा" इति भागस्योत्थानबीजं शास्त्रयुक्तिसम्मतं तद्व्याख्यानं च प्रदर्श्यते:—

पर्वतिथीनामाराधनाविधायकस्य तदौदयिकीत्वदिनानाञ्च तदाराधनाङ्गताविधायकस्य च जैनशास्त्रीयवचसो मिथो मेलनेन सर्वा अष्टम्यादिपर्वतिथयः स्वस्पर्शिसूर्योदयारब्धे दिने आराध्या इति जैनशास्त्रादेशः सम्पद्यत इति पूर्वमुक्तम् । एतदादेशानुसारेण दिनद्वये सूर्योदयस्पर्श

मासादयन्तीनां पर्वतिथीनां दिनद्वये आराधनायाः प्राप्तिर्भवति। परन्तु दिनद्वये एकस्यास्तिथेराराधनायाः जैनशास्त्रैरनादिष्टतया जैनसदाचार-प्रतिकूलतया च सा पूर्वोत्तरदिनयोराराधनायाः पाक्षिकत्वे पर्यवस्यति। एवञ्चाराधनायाः पाक्षिकप्राप्तौ औदीच्यदिन एव तस्याः नियमनाय "वृद्धौ कार्या तथोत्तरा" इति शास्त्रं समुत्तिष्ठति। तदर्थश्च—वृद्धौ-एकस्याः पर्वतिथेः सूर्योदयद्वयस्पर्शे, उत्तरा-उत्तरसूर्योदयदिनविशिष्टा। 'एव' इत्यध्याहार्यम्। पूर्वभागस्थः 'तिथिः' इति शब्दोऽत्रापि योज्यः।

तथा च तादृशदिनविशिष्टैव तिथिः, कार्या—आराधनावती कार्या इत्यर्थः। अयम्भावः—जैनागमैः पर्वतिथीनां तत्स्पर्शिसूर्योदयसमारब्धे दिने आराधनमादिष्टम्। आदेशश्चैष वृद्धिं गतायास्तिथेरेकदिनमात्रेऽपि समाराधनया परिपालितो भवति, प्रभवति च शास्त्राभिसंहितं फलं समाराधकाय वितरीतुमिति न कस्यापि प्रेक्षावतो दिनद्वये तादृशतिथ्याराधने प्रवृत्तिर्भवितुमर्हति। अस्यां स्थितावविशेषेण कदाचित् पूर्वदिने कदाचिच्च परदिने तादृशतिथ्याराधने जनप्रवृत्तिः प्राप्नोति। सा च जैनागमानां जैनसदाचाराणाञ्च प्रतिकूलतया नोचितेति सा मा भूयादिति भावनया श्रीमदुमास्वातिवाचकमुख्यैः "वृद्धौ कार्या तथोत्तरा" इति वचनमुदघोषि परैश्च तथैव पर्यग्राहि पर्यचालि च। तच्च वचः पूर्वदिने तदाराधनां निवर्तयत् परदिन एव तां व्यवस्थापयत् तन्नियमविधित्वे पर्यवस्यति।

अथवा वृद्धायास्तिथेराराधनाङ्गतया पूर्वोत्तरदिनयोः पाक्षिकप्राप्तौ सत्यां तदाराधनाङ्गभावेनोत्तरदिनस्यैव नियमनाय तद्वचनोत्थानमवसेयम्। एवं च तद्वचो वृद्धतिथ्याराधनायाः तदङ्गदिनस्य वा नियामकत्वेन व्यवतिष्ठते। तथा च "क्षये पूर्वा तिथिः कार्या" इति भागस्येव "वृद्धौ कार्या तथोत्तरा" इति भागस्याप्यनुरोधेन सर्वाः पर्वतिथयः स्वस्पर्शिसूर्योदयारब्धे दिने आराध्याः' इति जैनशास्त्रादेशः 'सर्वाः पर्वतिथयः स्वसमाप्तिविशिष्टसूर्योदयशालिनि स्वसमाप्तिसम्बन्धिनि वा

दिने आराध्याः' इत्येतदादेशत्वे पर्यवस्यति। वै० स्वपूर्वत्व, स्वपूर्व-सूर्योदयापूर्वत्वाभ्याम्।

न च वृद्धायास्तिथेः आराधनाङ्गतया पूर्वोत्तरदिनयोः पाक्षिक-प्राप्तौ सत्यां पूर्वदिनस्यैव वृद्धतिथ्याराधनाङ्गभावेन नियमनं न्याय्यं तद्दिने तस्या अहोरात्रव्यापित्वादिति परदिनस्य तथात्वेन नियमनं निर्बीजमिति वाच्यम्, पूर्वदिने तादृशतिथ्याराधनाङ्गत्वास्वीकारस्यारब्ध-तत्तिथ्याराधनायास्तत्तिथिसत्त्व एव भङ्गप्रसङ्गेनानुचितत्वात्। सर्वपर्व-तिथ्याराधनाङ्गदिनानां समाप्तिमद्दिनत्वेनानुगमाय परदिनादरात्। अन्य-तिथीनामिव वृद्धतिथीनामपि तत्समाप्तिदिन एव आराधनौचित्याच्च।

निर्वर्णितरीत्या "वृद्धौ कार्या तथोत्तरा" इति वचनार्थे निरूपिते वृद्धपर्वतिथेः परदिनमात्रे सत्ताया अनापत्त्या तत्पूर्वाया अपर्वतिथेः पर्वानन्तरपर्वतिथिवृद्धिस्थले च तत्पूर्वतराया अपर्वतिथेर्वृद्धिः श्रीसागरानन्दसूरिणा वर्ण्यमाना मान्यतापदन्नाधिरोहतीति तन्मते जायमानस्य टिप्पणविरोध–मृषाभाषण–पर्वलोप–नष्टभाविकार्यकारण-भावादिदोषव्रातस्य नास्मिन्मते स्पर्शगन्धोऽपि। तन्मते कथमेते दोषाः? इतिचेत् श्रूयन्ताम्—टिप्पणे यत्र पर्वतिथेर्वृद्धिरपर्वतिथेरवृद्धिश्चोक्ता तत्र तद्विरुद्धा पर्वतिथेरवृद्धिरपर्वतिथेश्च वृद्धिः स्वीक्रियत इति टिप्पणविरोधः। न चैष नगण्यो गणनीयष्टिप्पणस्य निजे विषये तिथिवृद्ध्यादिरूपे शास्त्रा-न्तरसंक्रमणस्यान्याय्यत्वात्। वृद्धाया अवृद्धात्ववादेनावृद्धायाश्च वृद्धात्व-वादेन मृषाभाषणदोषः। पर्वानन्तरपर्वतिथेर्वृद्धिस्थले पूर्वपर्वतिथेः टिप्पण-निर्दिष्ट उदयदिने आराधनालोपेन पर्वलोपात्मको दोषः। तत्रैव स्थले निवृत्तायाश्चतुर्दश्याः पूर्णिमाप्रथमदिने सत्तायाःस्वीकारेण नष्टचतुर्दशी-भावि-पूर्णिमयोः कार्यकारणभावलक्षणो दोषः।

अयम्भावः—वृद्धायाः पूर्णिमायाः द्वितीयदिनमात्रे सत्ताव्यवस्थापन बलेन प्रथमपूर्णिमादिने चतुर्दश्याः सत्त्वं वर्ण्यते। एतच्च तदैव स्याद् यदि पूर्णिमायाश्चतुर्दशीं प्रति कारणत्वं स्यात्। पूर्ववर्तिकारणस्य स्वोत्तरक्षणे

कार्योत्पादकत्ववत् उत्तरक्षणवर्तिकारणस्य स्वपूर्वक्षणे कार्योत्पादकत्वं च स्यात्, न चैतदस्ति, अतः पूर्णिमायाः द्वितीयदिनमात्रे सद्भावाभ्युपगमबलेन प्रथमपूर्णिमादिने चतुर्दश्याः सत्त्वोपपादनमशक्यमेव । यद्येवमुच्यते यन्न प्रथमपूर्णिमादिने चतुर्दश्यास्सत्त्वं स्वीक्रियते किन्तु कार्यमात्रं प्रति कालस्य कारणतया पूर्णिमात्मककालस्य चतुर्दश्यात्मककार्यकारणत्वात्, कारणे कार्यपदोपचारस्य च सर्वानुमतत्वेन प्रथमपूर्णिमायां चतुर्दशीपदोपचारः क्रियते, तदापि विनष्टे कार्ये भाविनःकारणतापत्तिरूपो दोपस्तदवस्थ एवेति ।

ननु नैतदुच्यते यद् द्वितीयदिने पूर्णिमानियमनबलेन पूर्वदिने चतुर्दशीसत्त्वं भवति पूर्णिमायामेव वा चतुर्दशीपदोपचारो भवतीति, किन्तु द्वितीयदिने पूर्णिमा, पूर्वदिने चतुर्दशी, तत्पूर्वदिनयोश्च त्रयोदशी-इत्येव वस्तुस्थितिरिति विज्ञास्यत इति चेन्न,जैनशास्त्रकारैरपि कुत्र दिने का तिथिरिति वस्तुस्थितिनिश्चितये टिप्पणस्यैव प्रमाणतयाऽभ्युपगमात् । यथोक्तं तत्त्वतरङ्गिण्यां श्रीधर्मसागरमहाभागैः एकविंशगाथाव्याख्यायां तिथेः क्षीणत्वनिर्वचनप्रसङ्गे खरतरं प्रति—"नो चेत् टिप्पणकमवलोकनीयम् तद्वेत्ता वा प्रष्टव्यः" इति । तच्च टिप्पणकं जैनटिप्पणव्युच्छेदानन्तरं सम्प्रदायान्तरपरिचाल्यमानमेव प्रमाणतया ग्रहीतुं जैनशास्त्रकारैरादिष्टं यथा—
"लौकिकटिप्पणाभिप्रायेण दीक्षोपस्थापनादिषु तिथिववादिकरणसन्ध्यागतादिनक्षत्रप्रथमादिनक्षत्रचन्द्रग्रहचन्द्रचारादिशुद्धमुहूर्तादानं पर्युषणापर्वकरणं च" ( श्रीविचारामृतसङ्ग्रह मु० प्र० पृ० १६ )

"अतएव लौकिके लोकोत्तरे च टिप्पणकव्यवहारप्रवृत्तिरपि प्रतिपदादितिथिक्रमेणैव व्युच्छिन्नेऽपि जैनटिप्पणके सम्प्रतिटिप्पणकप्रवृत्तिरेव तत्साक्षिणी" ( श्री प्रवचनपरीक्षा पृ० १६० )

"यत्तु जैनटिप्पणकानुसारेण श्रावणभाद्रपदवृद्धावपि आषाढवृद्धिरेव गण्यत इति तन्न युक्तम्, जैनटिप्पनकस्य व्युच्छिन्नत्वात्, सम्प्रति शैवटिप्पनकेनैव व्यवहारप्रवृत्तिः । तदनङ्गीकारे दीक्षाप्रतिष्ठादिमुहूर्तज्ञानं दूरे,

मासवृद्धिरपि कथं ज्ञायते ? तस्माच्छ्रावणभाद्रपदवृद्धिर्नोषाढ़तया व्यवहर्तव्या किन्तु श्रावणादितयैवेति" ( श्री प्रवचनपरीक्षा मु० पृ० ४४१ )

इत्थञ्च प्रामाणिकेषु जैनशास्त्रग्रन्थेषु सम्प्रदायान्तरपरिचालितटिप्पणस्य तिथिप्रवृत्त्यादिविषयजाते प्रमाणत्वेनोपादेयतायाः स्पष्टं प्रतिपादितत्वेन तदनुसारेण तिथीनां प्रवेशावस्थितिसमाप्त्यादीनामस्वीकरणमसद्वासनावशात् कामाचरणमेव ।

किञ्चेदमप्यत्रावधेयं यद् यदाऽभिवृद्धया पूर्णिमयोपगूढोऽपि प्रथमो दिवसो नपुंसकतया तामाराधनागर्भां कर्तुम्, सैव वा क्लैव्यात् स्वाश्लेषितारमपि प्रथमवासरमाराधनापितरं कर्तुं न क्षमते तदा स्वात्मानमनालिङ्गन्तीं चतुर्दशीमाराधनागर्भां कर्तुं स दिवसः, स्वामसंस्पृशन्तं च तं चतुर्दशी वा जनकपदास्पदं कर्तुं कथं क्षमेत ? अतोऽभिवृद्धपूर्णिमायाः प्रथमे दिने चतुर्दश्याराधनासम्भावना श्रीसागरानन्दसूरेर्न युज्यते, नचाभिवृद्धपूर्णिमादेः प्रथमो दिवसो न नपुंसकः प्रमाणाभावात्, न वा पूर्णिमादिरेव पूर्णा क्लीबा, किन्तु "वुड्ढे पढमोऽवयवो नपुंसओ निअयनामकज्जेपु । जण्णं तक्कज्जकारी इअरो सव्वुत्तमो सुमओ" ॥२०८॥

वृद्धे—मासादौ वृद्धे सति तदीयः प्रथमोऽवयवः, सूर्योदयद्वयस्पर्शिनी तिथिर्वृद्धेत्युच्यते, तत्राद्यसूर्योदयावच्छिन्ना तिथिः प्रथमोऽवयवो द्वितीयोदयावच्छिन्ना च द्वितीयोऽवयवः भण्यते, यदा चैकस्यां संक्रान्तौ मासद्वयस्योदयः स्यात् तदा मासवृद्धिरुच्यते, तत्र प्रथममासोदयावच्छिन्ना संक्रान्तिरेव प्रथमोऽवयवो भण्यते, परस्तु द्वितीय इति । एवं च सति तिथिमासयोराद्ययोरंशयोः प्रथमतिथ्यादिसंज्ञा स्यात् । तत्र प्रथमा तिथिर्मासो वा निजकनामकार्येषु—आषाढादिमासेषु प्रतिपदादितिथिषु चेदंकर्तव्यादिरूपेण स्वस्वनामाङ्कितकृत्येषु नपुंसक इव नपुंसको बोध्यः," इत्यादेः प्रवचनपरीक्षायाः ४०८–४०९ पृष्ठगतग्रन्थस्यानुसारेण प्रथमदिवसीया पूर्णिमादिरेव । एवं पूर्णिमादेः प्रथमो दिवसो न चतुर्दशीसंसर्गविधुरः किन्तु वृद्धपूर्णिमादेः "वृद्धौ कार्या तथोत्तरा" इति वचनेन

द्वितीयदिने नियमिततया पूर्णिमादेश्चतुर्दश्यव्यवहितोत्तरत्वनियमनिर्वाहाय प्रथमदिने नूनं निमन्त्रणीयया चतुर्दश्या संश्लिष्ट एवेति नोक्तदोषोदय इति वाच्यम्, एवमपि प्रथमपूर्णिमायाः क्लीबतया ततश्चतुर्दश्याराधनायाश्चतुर्दश्याश्चास्वतन्त्रायाः पुण्यपर्वरूपायाश्च पुण्यायाः प्रथमपूर्णिमादेः संसर्गेण दूषिते दिने आकर्षणासम्भवेन तत्सहयुक्तायास्ततोऽपि तदाराधनाया असम्भवात्।

न च "यथा हि नपुंसकः स्वापत्योत्पत्तिमधिकृत्यासमर्थस्तथा तन्नामाङ्कितकृत्येष्वेव सामर्थ्याभावकथनेन तस्याश्चतुर्दश्याराधनां प्रत्यसामर्थ्यस्यासिद्ध्या निराबाधैव ततश्चतुर्दश्याराधानोपपत्तिरित्यपराभूतमेव श्रीसागरानन्दवचनमिति वाच्यम्, प्रथमपूर्णिमादेः पूर्णिमात्वादिना तन्नामाङ्किताराधनादिकार्यकारितायाः प्राप्ततया तदधिकृतसामर्थ्यप्रतिक्षेप्त्योचित्ततयाऽऽवश्यकतया च तत्रैव ग्रन्थकारस्य व्यापृतत्वेऽपि तस्याश्चतुर्दश्याराधनादिसम्पादकतायाः कथञ्चिदप्यप्राप्ततयाऽनुचिते निष्प्रयोजने च तदधिकृतसामर्थ्यप्रतिषेधे ग्रन्थकारव्यापारविरहमात्रेण तस्यां क्लीबायां चतुर्दश्याराधनोपधानासम्भवात्।

अत एवात्र प्रसङ्गे सन्तानजनने सामर्थ्यहीनापि नारी युद्धादिदाक्ष्यं दर्शयत्येव रणस्थल इति स्वकार्येऽसामर्थ्ये परकार्येऽप्यसामर्थ्यमेवेति नियमाभावेन निजनिमित्तकाराधनोपपादनेऽक्षमापि प्रथमपूर्णिमादिश्चतुर्दश्याराधनोपपादने प्रभविष्यतीति यदुक्तं श्रीसागरानन्दसूरिणा, तदत्यन्तमयुक्तम्, मानवसन्तानजननेन स्वस्वामिनो जनकपदे प्रतिष्ठापने क्लैब्यादप्रभवन्ती नारी सुरसन्तानजननेन तस्य तत्पदे प्रतिष्ठापने कथं प्रभवेदिति प्रश्नसमानस्य निजनामाङ्किताराधनोपधानेन स्वभर्तारं प्रथमवासरमाराधनातनयाङ्कितं कर्तुमसमर्था प्रथमा क्लीबपूर्णिमादिश्चतुर्दश्यादिप्रधानतरपर्वाराधनोपपादनेन कथन्तमाराधनावन्तं कर्तुं शक्ष्यत इति प्रश्नस्यासमाधानत्वात्।

यच्च पूर्णिमादेर्वृद्धिस्थले पूर्णिमादेर्द्वितीये दिने पूर्णिमादेराराधने स्वीकृते प्रथमपूर्णिमादिनव्यवहिते पूर्वदिने चतुर्दश्या आराधनास्वीकारे चतुर्दशीपूर्णिमाद्योरव्यवहितपौर्वापर्येण आराधनानियमो नश्यत्यतः प्रथमपूर्णिमादिन एव चतुर्दश्याराधनास्वीकार आवश्यक इति श्रीसागरानन्दसूरिणोत्प्रेक्षितम्, तदपि न युक्तिमत्, तादृशनियमस्याप्रामाणिकत्वात्।

ननु आचारमयसामाचार्याः तृतीये पत्रे, श्रीसेनप्रश्नस्य १०५ पृष्ठे, श्रीसेनप्रश्नीयचतुर्थोल्लासस्य १०६ पृष्ठे च प्रतिमाधरं श्रावकं श्राविकां चाधिकृत्य यदुपवासद्वयविधानं सूचितं तस्य पूर्णिमायाः क्षयवृद्धिप्रसङ्गे पूर्वापर्वतिथेः क्षयवृद्धयोः स्वीकारेण तयोरव्यवहितपौर्वापर्यरक्षणं विना नोपपद्यत इति चेन्न, पूर्णिमायाः क्षयवृद्ध्यभावस्थले तत्सम्भवाभिप्रायेण तथा सूचनात्।

अयम्भावः—यत्राराधनोपयुक्तयोश्चतुर्दशीपूर्णिमादिनयोरव्यवधानं भवति तत्र तयोः षष्ठं कार्यम्, यत्र च पूर्णिमावृद्धिस्थले तयोरव्यवधानं दुर्घटम् तत्र पृथगेवोपवासद्वयं कार्यं नतु षष्ठम्, तेनापि चतुष्पर्व्याराधनोपपत्तेः, न हि षष्ठमवश्यकर्तव्यमेव, अशक्तस्य पूर्णिमायामाचाम्लादेरेव कर्तव्यताऽऽदेशात्। तथा च षष्ठसौविध्येऽप्यशक्तो तत्त्यागो यदि शास्त्रस्याभिमतस्तदा पूर्णिमावृद्धौ तदयोगस्थले तत्करणे शास्त्रानुरोधः कथं स्यात्?।

न च टिप्पणानुसारेण पर्वतिथेर्वास्तविकवृद्धिस्वीकारे सेनप्रश्नतृतीयोल्लासस्य सप्ताशीतिपृष्ठगतस्य "एकादशीवृद्धौ श्रीहीरविजयसूरीणां निर्वाणमहिमपौषधोपवासादिकृत्यं पूर्वस्यामपरस्यां वा किं विधेयम्?" इति प्रश्नोत्तररूपस्य "औदयिक्येकादश्यां श्रीहीरविजयसूरिनिर्वाणपौषधादि विधेयम्" इति ग्रन्थस्यानुपपत्तिः स्यात्, वृद्धैकादश्याः पूर्वापरयोर्द्वयोरेव दिनयोरौदयिकीत्वेनोक्तोत्तरस्य जिज्ञासानिवर्तकत्वाभावादिति वाच्यम्, वृद्धैकादश्याः द्वितीयदिनमात्र एवौदयिकीत्वपक्षेऽपि तत्पक्षबोधक-

शब्दस्याप्रयोगेण टिप्पणतो दिनद्वये एकादश्या औदयिकीत्वमवबुध्यतः प्रष्टुर्यथाश्रुतशब्दतो जिज्ञासाशान्त्यनुपपत्तितादवस्थ्यात्, किन्तु "औदयिक्येकादश्याम्" इति शब्दस्य—औदयिक्यामेव एकादश्यां न त्वस्तकालिक्यामौदयिक्यामपि—इत्यर्थकल्पनयैव जिज्ञासानिवृत्तिसम्भवात्, तादृशार्थस्य च वृद्धैकादश्याः दिनद्वये वास्तविकवृद्धिपक्ष एव युक्तत्वात्।

इत्थमेव "पूर्णिमाऽमावास्ययोर्वृद्धौ पूर्वमौदयिकी तिथिराराध्यत्वेन व्यवह्रियमाणाऽऽसीत्, केनचिदुक्तं श्रीतातपादाः पूर्वतनीमाराध्यत्वेन प्रसादयन्ति तत्किम्" इति प्रश्नवाक्येन "पूर्णिमाऽमावास्ययोर्वृद्धौ औदयिक्येव तिथिराराध्यत्वेन ग्राह्या" इत्युत्तरवाक्येन च घटिते ग्रन्थेऽपि औदयिकीशब्दस्योत्तरदिवसीयैवार्थः कार्यः, अन्यथा टिप्पणतो वृद्धायास्तिथेर्दिनद्वय औदयिकीत्वं बुध्यतः प्रष्टुस्तथोक्तप्रश्नकर्तृत्वासम्भवेन तत्प्रश्नग्रन्थस्यासङ्गत्यापत्तेः।

अथवा उत्—ऊर्ध्वम्, अयते—गच्छतीत्युदय उत्तरदिनम्, तत्र भवा औदयिकी—उत्तरदिवसीया इत्यौदयिकीशब्दस्यार्थो ग्राह्यः, तथा सत्येव पूर्वस्यामपरस्यां वा" इति प्रश्नानुरूपस्योत्तरस्य "औदयिकी" शब्दप्रयोगेण लाभात्।

अयम्भावः—"पूर्वस्यामपरस्यां वा" इति प्रश्नवाक्यम् एकादशीवृद्धिस्थले पूर्वदिवसीयात्वोत्तरदिवसीयात्वान्यतरविशिष्टैकादशीत्वावच्छिन्ननिष्ठतया विधेयत्वप्रकारकश्रीहीरविजयसूरिनिर्णपौषधादिधर्मिकजिज्ञासाबोधकम्। तादृशजिज्ञासा च तादृशान्यतरविशेषविशिष्टैकादशीत्वावच्छिन्नवृत्तितया विधेयत्वप्रकारकस्वसमानधर्मिकज्ञानादेव निवर्तितुमुचिताऽतः "औदयिक्येकादश्याम्" इत्यस्योत्तरवाक्यस्थशब्दस्योत्तरदिवसीयैकादश्यामित्यर्थपरत्वमेव युक्तम्, न तु सूर्योदयकालिक्यामेकादश्यामिति। न च "औदयिक्येकादश्याम्" इत्युत्तरशब्दस्य उत्तरदिवसीयैकादश्यामित्यर्थं कृत्वा यथोत्तरस्य प्रश्नानुरूप्यमुपपाद्यते तथा "पूर्वस्यामपरस्यां वा" इति प्रश्नवाक्यस्य "अनौदयिक्यामौदयिक्यां" वा

इत्यर्थं कृत्वाऽपि तदुपपादनसम्भवेन पूर्वोक्तं विनिगमनाविहीनमिति-वाच्यम्, वृद्धायां तिथौ पूर्वोत्तरयोर्द्वयोरेव दिनयोष्टिप्पणतः औदयिकीत्वमवगच्छतः प्रष्टुस्तथाविधप्रश्नकर्तृत्वासम्भवात् ।

न च "औदयिक्येकादश्याम्" इत्युत्तरवाक्यस्थशब्देन उत्तर-दिवसीयैकादश्यामित्यर्थस्य विवक्षितत्वं नावधारयितुं शक्यं तादृशार्थ-विवक्षायां "परस्यामेकादश्याम्" इति वाक्यप्रयोगस्यैवौचित्यादिति शङ्क्यम्, प्रश्नवाक्यस्थशब्देनैवोत्तराभिधाननियमाभावात् । किन्तु यादृश-धर्मिकयादृशप्रकारकजिज्ञासाप्रयुक्तो यः प्रश्नः, तादृशधर्मिकतादृशप्रकारक-बोधजनकमेव वाक्यं तदुत्तरतया प्रयोक्तव्यमिति नियमानुरोधेन उत्तरवाक्यस्थस्यौदयिकीशब्दस्योत्तरदिवसीयार्थकत्वकल्पनाया आवश्य-कत्वात् ।

ननु यदि टिप्पणानुसारेण पर्वतिथेर्वास्तविकी वृद्धिः स्वीक्रियते तदा श्रीहीरप्रश्नस्थिते " यदा चतुर्दश्यां कल्पो वाच्यते अमावास्यादिवृद्धौ वा अमावास्यायां प्रतिपदि वा कल्पो वाच्यते तदा षष्ठतपः क विधेयम् " इति प्रश्नवाक्ये निर्विशेषणाया अमावास्याया उपादानमसङ्गतं स्यात्, तस्याः वास्तववृद्धात्वे पूर्वस्यामपरस्यां वा तस्यां कल्पो वाच्यत इति निश्चितार्थाप्रत्ययेन प्रश्नार्थस्य सम्यग्बोधानवतारादिति चेन्न, पर्युषणाप्रधा-नतिथिरूपायाः भाद्रशुक्लचतुर्थ्याः कल्पसूत्रवाचनस्य पञ्चमदिवसीयतानि-यममवगच्छतोऽमावास्याशब्दमात्रेणापि द्वितीयामावास्याया असन्दिग्ध-बोधसम्भवात्, अग्रेतनस्य "प्रतिपदि" इतिशब्दस्य सान्निध्येन प्रतिपद्-व्यवहितायाममायां तच्छब्दतात्पर्यस्य सुसंवेद्यत्वाच्च । अन्यथाऽपर्वभूतायाः प्रतिपदो वृद्धेरन्यमतेऽपि वास्तविकतया ऊर्ध्वाङ्कितहीरप्रश्नस्थवाक्ये "प्रतिपदि" इत्येवं निर्विशेषणायाः प्रतिपदोऽपि निर्देशस्यासङ्गतेरुक्तन्यायेन प्राप्तायाः परिहारः कथं स्यात् ?

**न च** तथापि अमावास्यायाः वास्तववृद्धेरभ्युपगमे कल्पसूत्रश्रवणाङ्ग-मतस्य षष्ठतपसो विधानं न संगच्छते, चतुर्दशीद्वितीयामावास्ययोः

फल्गुभूतया प्रथमामावास्यया व्यवधानादिति वाच्यम्, प्रतिपदो वृद्धावपि प्रश्नस्यैतस्य समानत्वात्, चतुर्दशीप्रथमप्रतिपदोरमावास्यया व्यवधानात्। अतः प्रतिपदो वृद्धौ त्रयोदशीचतुर्दश्योः षष्ठतपसोऽमावास्यायां पारणां कृत्वा प्रथमप्रतिपदि एकोपवासमात्रेण, अथवा प्रथमद्वितीयप्रतिपदोः षष्ठेन सह कल्पश्रवणे प्रवृत्तिव्यवस्था यथा क्रियते तथाऽमावास्यावृद्धावपि त्रयोदशीचतुर्दश्योः षष्ठस्य प्रथमामावास्यायां पारणां कृत्वा द्वितीयामावास्यायामेकोपवासमात्रेण द्वितीयामातदुत्तरतिथ्योः षष्ठेन सह वा कल्पसूत्रश्रवणप्रवृत्तेः व्यवस्थासम्भवात्।

किञ्च पर्वतिथीनां क्षयवृद्धी अनभ्युपगम्य तत्पूर्वपूर्वतरायास्तयोरङ्गीकारे पर्वानन्तरपर्वतिथिस्थले यदा पूर्वपर्वतिथेर्वृद्धिरुत्तरपर्वतिथेश्च क्षयष्टिप्पणे प्राप्यते तदा पूर्वोत्तरयोर्द्वयोरेव पर्वतिथ्योराराधनाया आकुलीभावः प्रसज्ज्यते। तथा हि "क्षये पूर्वा तिथिः कार्या" इत्यंशानुरोधेन क्षीणाया उत्तरपर्वतिथेः "वृद्धौ कार्या तथोत्तरा" इत्यंशवशेन च वृद्धायाः पूर्वपर्वतिथेरेकस्मिन्नेव दिने औदयिकीत्वं प्राप्यते, एकस्मिन् दिने च द्वयोस्तिथ्योः सूर्योदयसम्बन्धलक्षणमौदयिकीत्वं न सम्भवति, उक्तवचोबलेन तस्याभ्युपगमेऽपि एकस्मिन्नहनि पर्वतिथिद्वयस्यानाराध्यतायाः पराभिमतत्वेन तादृश्योर्द्वयोस्तिथ्योः सहाराधना नैव सम्भावनार्हा।

न च "क्षये पूर्वा तिथिः कार्या" इति वचनेन प्रथममेव क्षीणोत्तरपर्वतिथेः क्षयदिने औदयिकीत्वविधानपुरस्सरं तत्पूर्वपर्वतिथेस्तद्दिनेऽसत्त्वस्य व्यवस्थापनात् तस्याः वृद्धेरेवासिद्धतया तत्र "वृद्धौ कार्या तथोत्तरा" इति वचनप्रवृत्तेरसम्भवेन प्रथमदिने तस्या औदयिकीत्वस्य द्वितीयदिने क्षीणोत्तरपर्वतिथेश्चौदयिकीत्वस्य निष्कण्टकतया प्रथमदिने पूर्वपर्वतिथेर्द्वितीयदिने च परपर्वतिथेराराधना निर्बाधेति वाच्यम्, अमादिरूपाया उत्तरपर्वतिथेः क्षयनिर्देशेन "क्षये पूर्वा" इत्यादिपूर्वार्द्धस्य चतुर्दशीरूपायाः पूर्वपर्वतिथेर्वृद्धिनिर्देशेनोत्तरार्धस्य च युगपदेव प्रवृत्तत्वेनोक्तकल्पनाया असम्भवात्, "वृद्धौ कार्या तथोत्तरा"

इति वचनोत्थानप्रयोजकस्य टैप्पणिकवृद्धिनिर्देशस्य पूर्वपर्वतिथौ सत्त्वेन तत्र तद्वचनप्रवृत्तेर्दुष्परिहरत्वाच्च ।

"क्षये पूर्वा" इत्याद्याचार्योमास्वातिवाचकवचनस्य कल्याणकतिथि-व्यतिरिक्तपर्वतिथिमात्रपरत्वं यदुपवर्णितं श्रीमता सागरानन्दसूरिणा, तन्न समञ्जसम्, तदीयतथाभ्युपगमबीजतया प्रतीयमानानां सदोषत्वात्, तथा हि तदभ्युपगमबीजतयाऽग्रे पदं निर्देक्ष्यमाणा एव हेतवः प्रतिभान्ति ।

यथाः—

(१) यदीदं वचः कल्याणकतिथिविषयकमपि स्वीक्रियते तदा यदा अक्षीणाष्टम्याद्यनन्तरं काचित् क्षीणा कल्याणकतिथिः प्राप्यते तदा तस्या अनुरोधेन अक्षीणाष्टम्यादीनामप्याराधनं टिप्पणनिर्दिष्टे मुख्ये तत्समये नोपपद्यते ।

(२) एवं यदाऽनेकाः प्रधानाप्रधानपर्वतिथयः क्रमेण प्रवर्तन्ते, यथा—वैशाखशुक्ले सप्तमीतः पूर्णिमां यावत्, तदाऽन्तिमायाः क्षीणत्वे तस्या औदयिकीत्वसम्पादनानुरोधेन तत्र सर्वासामपकर्षः करणीयो भवेत्, तथा च प्राक्पश्चाद्वर्तिनीनां द्वित्राणामेव तिथीनामालोचनेन तिथिनिर्णयं कृत्वा धर्माद्यनुष्ठाने लोकस्य प्रवृत्तिशीलतास्वभावानुसारं यदि कश्चित् कथितस्थले प्रथमतस्तिथीराराधयन् अन्तेऽन्तिमां तिथिं क्षीणां प्राप्नोति, तदा गतानां तिथीनां परावर्तनं कृत्वा पुनस्तासामाराधनायाः कर्तुमशक्यतया तासां यथाकालमनाराधननिमित्तो दोषस्तस्य प्रसज्ज्येत ।

(३) एवमेव प्रतिसंवत्सरं सप्तत्याः कल्याणकतिथीनां प्रतिमासञ्च तद्भिन्नानां द्वितीयापञ्चम्यादिपर्वतिथीनाञ्च भावेन प्रतिमासमनेकाः कल्याणकतिथयस्तदितराः पर्वतिथयश्चोपतिष्ठन्ति । तासु कियत्यः क्षीणाः कियत्यश्च वृद्धाः भवितुमर्हन्ति । एतस्थितौ यदि तद्वचः प्रधानाप्रधानतिथिविषयकं मन्यते तदा टिप्पणस्य प्रायः प्रतिमासमनेकत्राप्रामाण्य-

प्रसङ्गेन तस्याविश्वसनीयताऽऽपत्त्या यास्तिथयो यत्र दिने क्षीणतया वृद्धतया वाऽपि सन्ति नवेति सन्देहस्यानिवार्योत्पत्त्या तद्वचसः प्रवृत्तेर्मूलमेव प्रतिहन्यते ।

(४) प्रकरणबलादुक्तवचसो घटकस्य तिथिपदस्य प्रधानपर्वतिथिमात्रपरतया तस्य वचसः कल्याणकतिथिपरत्वं न मान्यम् ।

(५) एतद्वचो यदि कल्याणकतिथिविषयकमपि मन्यते तदा तस्याः कल्याणकतिथिपरत्वाभावप्रत्यायकानां कल्याणकव्यतिरिक्तपर्वतिथिमात्रपरतया तद्वचोव्याख्यानपराणाञ्च जैनशास्त्रान्तर्गतप्रामाणिकग्रन्थानां विरोधः प्रसज्यते ।

(६) कल्याणकतिथ्याराधनायाः लोकवृत्तानुसारेण सम्पादनसम्भवेन निष्प्रयोजनतया तस्य वचसः कल्याणकतिथिपरता नाभ्युपेतव्या ।

अत्रेदमभिधीयते:—

उक्तहेतुष्वेकतमोऽपि "क्षये पूर्वा" इत्यादिवचसः कल्याणकतिथिव्यतिरिक्तपर्वतिथिपरत्वव्यवस्थापनाय न क्षमते ।

तथा हि—

(१) प्रथमेन हेतुना तद्वचसः कल्याणकतिथीतरपर्वतिथिमात्रपरता न सिद्ध्यति । यतो हि यदि टिप्पणनिर्दिष्टस्तत्तत्तिथिकाल एव मुख्योऽभ्युपेयते, तदा कल्याणकतिथीतरपर्वतिथिमात्रपरत्वेऽपि पर्वानन्तरपर्वतिथीनां क्षयादिस्थले पूर्वपर्वतिथीनां मुख्यकाले आराधनानुपपत्तिरपरिहार्यैव परमते ।

(२) द्वितीयेनापि हेतुना विवक्षितोऽर्थः साधनानर्हः, धार्मिकानुष्ठानेऽपेक्षितसावधानतायाः यथावदनाश्रयणेन तादृशदोषेण तादृशपुरुषग्रासस्यावश्यकत्वात् । अन्यथा तस्य वचसो विवक्षिततिथिमात्रपरत्वाभ्युपगमेऽपि क्षीणां वृद्धां वाऽमावास्यां पूर्णिमां वाऽनवधाय चतुर्दश्याः टिप्पणप्रवेदित औदयिकीत्वदिने कृततदाराधनस्य कृते किं व्यवस्थाप्येत ?

(३) तृतीयेनापि हेतुना नाभिमतसिद्धिः, तस्य वचसः कल्याणकतिथ्यन्तरपर्वतिथिमात्रपरत्वेऽपि प्रतिमासं तादृशीनां द्वादशपर्वतिथीनां सत्त्वेन तासु कतिपयपर्वतिथीनां प्रायः प्रतिमासं क्षयवृद्धयोर्निर्देशस्य टिप्पणे सम्भवेन तादृशसर्वनिर्देशविषये तस्याप्रमाणिकत्वाङ्गीकारेऽन्यांशेऽप्यप्रामाण्यशङ्काप्रसङ्गे नाविश्वसनीयताऽऽपत्त्या क्षीणादितिथिविषयककथितसन्देहोत्थितेरवर्जनीयतया तद्वचोमूलभङ्गप्रसङ्गस्य दुश्चिकित्स्यत्वात् ।

(४) प्रकरणवलादप्युक्तवचसः कल्याणकपर्वतिथिभिन्नपर्वतिथिमात्रपरत्वं स्वीकर्तुं न शक्यम्, तादृशप्रकरणस्याभावात् । तथा हि "क्षये पूर्वा" इत्यादिवचनमुमास्वातिवाचकप्रघोषत्वेन प्रसिद्धं केवलं श्रूयते, तस्य प्राच्यमौदीच्यं वा तत्प्रघोषयितुः किमपि वचनान्तरं न श्रूयते, येन प्रधानपर्वतिथिविचारप्रकरणे पठितत्वात् तत्स्थस्य तिथिपदस्य प्रधानपर्वतिथिमात्रपरत्वं कल्प्येत । न च क्षीणानां वृद्धानां च तिथीनामाराधनोपपादकतया तस्य प्रधानपर्वतिथिप्राकरणिकतास्वीकार इति सङ्गतं क्षीणानां प्रधानपर्वतिथीनामेवाराधनोपपत्तये तत्प्रघोषो न तु कल्याणकतिथीनामित्यस्यासिद्धतया तथा कल्पनाया असम्भवात् ।

किञ्च तद्वाक्यघटके तिथिपदे श्रुते यदि तेन नानार्थकेनात्र वहवोऽर्था उपस्थाप्येरन् तदा कोऽर्थोऽत्राभिप्रेत इति भवेदभिप्रायभेदबुभुत्सा, यत्प्रशमनाय प्रकरणमपेक्ष्येत । तिथिपदन्तु तिथित्वरूपसामान्यधर्मावच्छिन्नैकवृत्तिकमिति तेन तिथित्वरूपेण तिथिसामान्यस्योपस्थापनात् सामान्यधर्मावच्छिन्नवाचकपदप्रयोगवलादेव च सामान्यधर्मावच्छिन्ने तात्पर्यग्रहसम्भवेन प्रकरणस्यानपेक्षणात्, सामान्यधर्मावच्छिन्नवाचकपदस्य वाधकादिकमन्तरा विशेषधर्मावच्छिन्ने सङ्कोचासम्भवाच्च ।

न च यथा घटसामान्यवाचिनो "घटेन जलमाहर" इति वाक्यस्थघटपदस्य सच्छिद्रे घटे जलाहरणकरणताया वाधिततया सच्छिद्रेतरघटमात्रबोधकता भवति, तथा "क्षये पूर्वा" इत्यादिवाक्यस्थतिथि-

पदस्यापि प्रधानपर्वतिथिमात्रबोधकतास्वीकारे किं बाधकमिति वाच्यम्, तथास्वीकारसाधकाभावस्यैव बाधकत्वाद् दृष्टान्तमात्रस्यासाधकत्वात् ।

न च तथापि "प्राश्नन्ति ब्राह्मणा ओदनम्, इति पूर्वमीमांसाऽऽधानप्रकरणपठित आधानाङ्गभूतब्रह्मौदनप्राशनार्थं ब्राह्मणविधायके वाक्येऽविशेषश्रुतब्राह्मणपदस्याधानाङ्गाध्वर्य्वादिब्राह्मणमात्रबोधकतावत् उक्तवाक्यस्थतिथिपदस्यापि प्रधानपर्वतिथिमात्रबोधकतया समुचितेति विपर्यस्तऽयम्, तन्न, आधानप्रकरणस्येवात्र प्रधानपर्वतिथिप्रकरणस्याभावात् । श्रीसागरानन्दसूरिणा तदादेशेन वाग्वर्षिणाऽपरेण वाऽपि तादृशप्रकरणसम्प्रदर्शयता प्रकरणशब्दप्रयोगमात्रस्यैव कृतत्वात् ।

ननु तत्तद्ग्रन्थेषु प्रधानपर्वतिथीनामेव क्षयवृद्धिविषयको विचारो दृश्यते, यथा श्रीहीरप्रश्नस्य २२ पृष्ठे "यदि पञ्चमी तिथिस्त्रुटिता भवति" "पूर्णिमायाञ्च त्रुटितायाम्" श्रीहीरप्रश्ने १४पृष्ठे "पूर्णिमाऽमावास्ययोर्वृद्धौ" श्रीसेनप्रश्नस्य तृतीयोल्लासे "एकादशीवृद्धौ" इत्यादिः, यदि पुनः कल्याणकतिथीनामपि क्षयवृद्धी विचारणीये स्याताम्तदा तासामपि नामग्राहं क्षयवृद्धिविचारोऽपि स्यादेव, परं क्वापि द्वितीयादीरुपादाय तत्क्षयवृद्धिविचारो विहितो नोपलभ्यते, अतोऽनुमीयते यत्तद्वचसः प्रधानपर्वतिथिपरत्वमेव मन्यन्ते शास्त्रकारा इति चेन्न, पञ्चम्यादिषु कल्याणकतिथित्वस्यापि सत्त्वेन तासां क्षयवृद्धिविचारेण कल्याणकतिथीनामपि क्षयवृद्धिविचारस्य गतार्थतया पृथक् तदुपादानेन विचारस्य निष्प्रयोजनत्वादेवाकृतत्वेन तथाऽनुमातुमशक्यत्वात् । अतः "क्षये पूर्वा" इत्यादिवचनस्य कल्याणकतिथिभिन्नपर्वतिथिमात्रपरत्वसाधकप्रमाणस्याभावात् सदाचारस्य च कल्याणकतिथिपरतासाधकस्य सद्भावात् तस्य प्रधानाप्रधानसाधारणतिथिपरत्वमेव निष्कम्पमङ्गीकार्यम् ।

किञ्च श्रीसेनप्रश्नस्य तृतीयोल्लासे "एकादशीवृद्धौ श्रीहीरविजयसूरीणां निर्वाणमहिमपौषधोपवासकृत्यं पूर्वस्यामपरस्यां वा विधेयम्"

इत्यादिरूपेण यदा वृद्धैकादश्याः कल्याणकाऽपेक्षयापकृष्टतिथिभावेन ग्रहणार्थं वृद्धपर्वतिथिरीतिराहृता दृश्यते तदा कल्याणकतिथिवृद्धयादि-प्रसङ्गे वृद्धाष्टम्याद्याराधनाव्यवस्थापनरीत्यादरे सन्देहस्य स्थानमेव कथमवशिष्यत इति सुधीभिर्विभावनीयम् ।

न च "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा, श्रीवीरज्ञान-निर्वाणं कार्यं लोकानुगैरिह" इति प्रघोषघटकेन चरमचरणद्वयेन कल्याणकतिथ्याराधनस्य लोकवृत्तानुसारित्वकथनादाद्यपादद्वयस्य कल्याणकतिथ्यसाधारण्यमसन्दिग्धवेद्यमिति वाच्यम्, पूर्वार्धेन क्षयवृद्धिस्थले सर्वपर्वतिथिसमाराधनव्यवस्थायां विहितायां श्रीमहावीरनिर्वाणस्यापि पर्वतिथ्यन्तरवत् करणीयतायाः प्राप्ततया दीपावलीदिन एव जैनसमाजे प्रचलितायास्तदाराधनप्रणालिकायाः रक्षाराहित्यस्य प्रसक्तत्वेन तत्परित्राणाभिप्रायेण श्रीवीरज्ञाननिर्वाणस्यैकलस्य लोकरीत्या दीपावलीदिन एव कर्तव्यताया उपदेशात् ।

अत्रेदं नूनमवधेयं यत् कल्याणकतिथीनां क्षये क्षीणानां पर्वतिथीनामिव तासामप्यौदयिकीत्वसम्पादनेनैवाराधनमाननं न्याय्यम्, अन्यथा प्रथमदिने सूर्योदयानन्तरं प्रवृत्तानां द्वितीयदिने च सूर्योदयानन्तरं निवृत्तानां कल्याणकतिथीनान्तथाविधप्रधानपर्वतिथिन्यायेन "तिथिश्च प्रातः प्रत्याख्यानवेलायां या स्यात् सा प्रमाणम्" इति श्राद्धविधिप्रकरणस्थवचनानुसारेण द्वितीयदिन एवाराधनानियमः श्रीजैनसङ्घेन नानुमन्येत, किन्तु भूयस्त्वानुरोधेन प्रथमदिन एव स्वीक्रियेत । तथा च यदि "क्षये पूर्वा तिथिः कार्या" इति वचनस्य कल्याणकतिथिविषयकत्वं नाङ्गीक्रियते तदा-क्षीणकल्याणकतिथीनां परनयेनौदयिकीत्वसम्पादनस्यासम्भवतया तदाराधनमनुपपन्नमेव स्यात्. एवं तद्वचसः कल्याणकतिथिपरत्वाभावे कल्याणकतिथिवृद्धिस्थले श्रीजैनजनताऽऽदृतो द्वितीयस्मिन्नेव दिने तदाराधननियमोऽपि हीयेत, नियामकाभावेन कदाचित्पूर्वदिने कदाचिद् द्वितीयदिने कदाचिदुभयत्रैव वा यथाकामं तदाराधने प्रवृत्त्यापत्तेः परिहर्तुमनर्हत्वात् ।

एतदभ्युपगम एव तत्त्वतरङ्गिणीपञ्चमपृष्ठगतः "आराध्यत्वे च पञ्चदशीकल्याणकतिथ्योरप्यविशेषः" इति ग्रन्थोपि संगच्छते ।

(५) पञ्चमेन हेतुनापि न मनोरथसिद्धिः, तद्वचसः कल्याणकतिथिपरताराहित्यवेदिनो वचनस्य तदितरपर्वतिथिमात्रपरतया तद्व्याख्यानस्य च क्वापि प्रामाणिके जैनशास्त्रग्रन्थेऽधुनावध्यदर्शनात् ।

(६) षष्ठेनापि प्रकारेण पराशयपोषणं दुःशकमेव, चतुर्थहेत्वालोचनप्रसङ्गे कथितेन यथा श्रीमहावीरनिर्वाणतिथ्याराधनाया एव लोकवृत्तानुसारितायाः जैनशास्त्रेपूपदेशात् ।

किञ्च कल्याकणतिथीनां द्वितीयाऽष्टम्याद्यपेक्षयाऽप्रधान्याद् यदि तासां क्षयवृद्धिस्थले तदनुरोधेन प्रधानपर्वतिथीनां टिप्पणोक्ते समये आराधनपरिहारस्य युक्तत्वं नेक्ष्यते तदा चतुर्दश्याः पाक्षिकचातुर्मासिकपर्वतिथितया पूर्णिमाऽमावास्यापेक्षयोत्कृष्टतरत्वेन भाद्रशुक्लचतुर्थ्याश्च सांवत्सरिकपर्वतिथितया भाद्रशुक्लपञ्चम्यपेक्षयोत्कृष्टतरत्वेन पूर्णिमाऽमावास्याभाद्रशुक्लपञ्चमीनां क्षयवृद्धिप्रसङ्गेऽपि तासामनुरोधेन तदुत्कृष्टतरोक्ततिथीनां टिप्पणोदितसमये समाराधनपरिहारोऽपि नैव युक्तो भवेदिति चतुर्दशीभाद्रशुक्लचतुर्थ्योस्तदुत्तरतिथीनां क्षयवृद्धिदशायामनुकर्षणपुरस्करणयोः कर्तव्यताप्रचारे कृतपरिकरः श्रीमान् सागरानन्दसूरिस्तद्विराधनैनसामास्पदं कुतो न भवेदित्यनुचिन्तनीयम् ।

## एतावतो लेखस्य सारः संक्षेपतस्तावदेवमवसेयः—

(१) श्रीश्वेताम्बरमूर्तिपूजकजैनजनतासु श्रीविजयदेवसूरिसमनन्तरं देवसूरिगच्छीयतया गीयमानेन तपागच्छीयचतुर्विधसङ्घेन टिप्पणोक्ते पर्वतिथीनां क्षयवृद्धी अनभ्युपगम्य ततः पूर्वासाम् पूर्वतराणां वाऽपर्वतिथीनां क्षयवृद्धी स्वीकृत्य पर्वतिथ्याराधनव्यवहारो यः कियतः कालात् प्रचलितो विद्यते स जैनागमानामनुपजीवकस्तत्प्रतिकूलो जीतव्यवहारपदानर्होऽसनातनो यतिप्रधानाद् ज्ञानाचारशैथिल्यकालात्प्रवृत्तश्च ।

(२) "क्षये पूर्वा तिथिः कार्या" इत्यादिवचनं क्षीणायाः वृद्धायाश्च पर्वतिथेराराधनादिननिश्चयाय प्रवृत्तम्। तच्च पर्वतिथीनां पञ्चाङ्गोक्तक्षयवृद्ध्योर्यथाऽवस्थितावप्युपपद्यते, नातः पञ्चाङ्गमर्यादोन्मर्दिनि पर्वतिथीनां क्षयवृद्ध्योस्तत्पूर्वपूर्वतरापर्वतिथिगतताप्रतिपादने तत्तात्पर्यं स्वीकार्यम्।

(३) कल्याणकतिथीनामपि पर्वतिथित्वस्य आराधनायां पौर्णमास्यविशेषस्य च शास्त्रेषु प्रतिपादनात् क्षीणवृद्धपर्वतिथिसामान्यस्याराधनादिननिश्चयाय प्रवृत्तस्य "क्षये पूर्वा" इत्यादिशास्त्रस्य कल्याणकतिथीनामप्याराधनादिननिश्चायकत्वमस्ति।

(४) पर्वतिथीनां पूर्वसूर्योदयसमये प्रवृत्तिरुत्तरसूर्योदयसमये निवृत्तिश्चेति नैष नियमो जैनशास्त्रानुमतः किन्त्वन्यतिथीनामिव तासामपि प्रवृत्त्यादिविषये पञ्चाङ्गमेव प्रमाणम्। जैनशास्त्राणि तु याः पर्वतिथयो यस्मिन् दिने समाप्तिमुपयान्ति तस्मिन् दिने सूर्योदयसमयात्तदाराधनमारब्धव्यमारम्भोत्तरसूर्योदयानन्तरञ्चोपसंहर्तव्यमित्येवावगमयति।

(५) जैनटिप्पणव्युच्छेदानन्तरं सर्वतिथिप्रवृत्त्यादिपरिच्छेदाय वैदिकसम्प्रदाये प्रचलितटिप्पणस्यैव प्रमाणत्वेन जैनजनोपादेयतायाः जैनशास्त्रादिष्टतया तत्प्रातिकूल्येन तिथीनां क्षयवृद्ध्यादिकल्पनमनुचितम्।

(६) पञ्चाङ्गानुसारेण याः पर्वतिथयो यस्मिन्नेकस्मिन्नेव दिने औदयिक्यस्तासामाराधनं तद्दिने एव कर्तव्यतया जैनशास्त्रादिष्टम्, अन्यथा क्रियमाणञ्च प्रत्यवायापादकं भवति।

(७) क्षीणायाः पर्वतिथेः क्षयदिने वृद्धायाश्च परदिने य आराधनाऽऽदेशो विद्यते स तद्दिने तत्तिथिसमाप्तिहेतुक एव।

(८) एकस्मिन् दिने द्वयोः पर्वतिथ्योः व्यपदेश्यता, विद्यमानताऽऽराधनीयता च तत्त्वतरङ्गिण्यादिग्रन्थेषु प्रविन।[प्र]तिपत्ति प्रतिपादिता।

(९) पूर्णिमाऽमावास्यापेक्षया चतुर्दश्याः भाद्रशुक्लपञ्चम्यपेक्षया भाद्रशुक्लचतुर्थ्याश्च प्राधान्येन तयोष्टिप्पणोक्ते मुख्यकाल एवाराधनाया औचित्येन तदाराधनाऽन्यथकरणमयुक्तमशास्त्रीयञ्च।

(१०) क्षीणायास्तिथेरत्यन्तलोपो न भवत्यतस्तस्या अप्येकस्वतन्त्रतिथितया गणना न्याय्यैव। एवं वृद्धायास्तिथेरपि न तिथिद्वयात्मता किन्त्वेकतिथ्यात्मतैवेति नातः पर्वतिथीनां वास्तवक्षयवृद्ध्योः स्वीकारेऽपि तासां द्वादशसंख्याकत्वनियमहानिप्रसक्तिः।

(११) "उदयं मि जा तिही सा" इत्यादेः "क्षये पूर्वा" इत्यादेश्चोत्सर्गापवादभावो मुख्यकाले पर्वतिथ्याराधनालोपपर्यवसायी शास्त्रयुक्तिविरुद्धः।

(१२) या पर्वतिथिः साधारणतिथिर्वा क्षीणतया वृद्धतया वा पञ्चाङ्गेन यथा निर्दिश्यते सा तथैव मान्या, या पर्वतिथिर्यत्र दिने समाप्तिं लभते तत्रैव दिने सा समाराध्या, पूर्णिमाऽमावास्ययोः क्षये चतुर्दश्यौदयिकीत्वदिने चतुर्दश्या सह पूर्णिमाया अमावास्यायाश्चाराधनं सम्भवति, भाद्रशुक्लपञ्चमीक्षये च भाद्रशुक्लचतुर्थ्या सह तस्या अप्याराधनं सम्भवति, पर्वानन्तरपर्वतिथेर्वृद्धौ पूर्वोत्तरपर्वतिथ्योर्व्यवधानेनाराधनं न विरुद्धम्, अतः पाक्षिकचातुर्मासिकसांवत्सरिकप्रतिक्रमणतिथीनां यत्र दिने समाप्तिः पञ्चाङ्गेनावेद्येत तद्दिन एव तदाराधनं कार्यमित्यादिरेव जैनशास्त्रपुरातनजैनसमाचारादिभिस्समर्थितो भवति।

श्रीसागरानन्दसूरेः श्रीरामचन्द्रसूरेश्च स्वपक्षस्थापनपरपक्षप्रत्यवस्थापने, मध्यस्थनिर्णयपत्रम्, आगमानुसारिमतव्यवस्थापनम्, शासनजयपताकां विवादास्पदविषयसम्बद्धान् निखिलानुपलभ्यमानजैनशास्त्रग्रन्थाँश्च सम्यक् सुचिरमालोच्य पर्वतिथीनां क्षयवृद्धिप्रसङ्गे यो जैनशास्त्रसामाचार्यनुसारी सिद्धान्तोऽस्माभिर्व्यवस्थापि तदनुसारेणैव जैनजनैर्निजधार्मिकानुष्ठाने प्रवर्तितमितिनिर्दिशन्तस्समुद्घोषयामो वयं यदस्माकं समितिरस्मद्व्यवस्थापितसिद्धान्तविरुद्धवादिमण्डल्या सह प्रत्यक्षशास्त्रार्थविचाराय सर्वदा बद्धपरिकरा वर्तत इति।

# शुद्धिपत्रम्

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| आनुपूर्वीं | १ | ७ | आनुपूर्वी |
| सर्वसम्मतत्वान् | १ | १० | सर्वसम्मतत्वात् |
| वषरा | १ | १६ | वपरा |
| तत्पूर्वत्या | ३ | १२ | तत्पूर्वस्या |
| ब्रम: | ४ | ११ | ब्रूम: |
| दिनेपु | १२ | २३ | दिनेषु |
| तद्वय | १३ | ५ | तद्वय |
| यास्यिथ्य | ,, | ७ | यास्तिथ्य |
| पूर्व | ,, | ८ | पर्व |
| द्वयथे | ,, | १२ | द्वये |
| तद्वचसस् | १४ | ३ | तद्वचस् |
| दिवसींयास् | ,, | ९ | दिवसीयायास् |
| चास | ,, | ११ | चारु |
| अग्रेतनी | १५ | ८ | अग्रेतना |
| कथन्न | ,, | ४ | कथन्तर्हि |
| अनावश्यत्वात् | ,, | ११ | अनावश्यकत्वात् |
| तु सत् | ,, | १३ | तु न सत् |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
| --- | --- | --- | --- |
| प्रवृत्तोः | ,, | २० | शास्त्रसिद्धतया टिप्पण प्रवृत्तेः |
| कस्यांश्चद | १६ | २ | कस्याश्चित् |
| निम्यते | ,, | १४ | नियम्यते |
| प्राक्तन्यास | ,, | १६ | पूर्वतन्यास् |
| भवति | ,, | ,, | भवति" |
| निर्निष्ट | १७ | २ | निर्दिष्ट |
| मितत्व | ,, | १८ | मतित्व |
| प्राक्तन्याः | १८ | ४ | पूर्वतन्याः |
| प्राच्य | ,, | ५ | प्राच्यम् |
| निर्मर्याद | ,, | १० | निर्मर्यादं |
| वचन | १८ | १६ | वचनं |
| समन्वयः | ,, | १९ | समन्वयः का वा चारुता |
| निजोचित | १९ | ६ | निजोचितं |
| इति | ,, | ५ | इति नियमविधिविधायकेन शास्त्रेणोत्तरस्यामेवादयिकीत्वं |
| विषय | ,, | १८ | विषयक |
| समान्य | २० | ४ | सामान्य |
| दृष्टे | ,, | ९ | दृष्टांया |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| नियमन | ,, | ११ | नियमनम |
| कृद्ववचनं | ,, | १२ | कृद्वचनं |
| परात्वस्य | २१ | ५ | परात्वस्य च |
| आत्मवान | ,, | १२ | ज्ञानवान |
| देहो | ,, | ,, | देहे |
| सम्मतं | ,, | २१ | सम्मतं मतं |
| तथोतरा | २२ | १७ | तथोत्तरा |
| पर्वा | २३ | ११ | पर्वा |
| तस्याः | ,, | १४ | तस्याः पर्वतिथित्वात् |
| च | २४ | ११ | च न |
| क्षीणतया | ,, | १७ | क्षीणतयाऽक्षीणतया |
| थ्यि | ,, | २२ | तिथ्या |
| तद्दिने | २५ | ८ | तद्दिने "क्षये पूर्वा" |
| इति | ,, | १० | इति । |
| रोधेन | ,, | १२ | रोधेन । |
| वचसां | २६ | २ | वचसा |
| एवं......अपर्वतिथे | ,, | ११—१२—१३ | अधिकः |
| पर्णिमा | ,, | २६ | पूर्णिमा |
| पूर्णिमाक्षये | २७ | २४ | पूर्णिमावृद्धौ |
| सामाधानं | ,, | २५ | समाधानं |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| यस्यो | २८ | ४ | तस्यो |
| परपम्परा | ,, | १४ | परम्परा |
| तनी | २९ | ३ | तना |
| आगमस्य | ३० | १२ | आगमस्यापि |
| दृश्या | ३४ | ७ | दृश्या |
| व्यवस्थाप्यते | ३५ | ९ | व्यवस्थाप्येत |
| क्यप्रमक्तेः | ,, | ८ | क्याप्रसक्तेः |
| न्ययाविषयत्व | ,, | १५ | न्यायाविषयत्व |
| माषि | ,, | २१ | भाषि |
| ताद्दश | ३६ | ४ | तादृश |
| पृछयते | ४३ | १८ | पृच्छयते |
| तस्या | ४४ | १ | तस्यां |
| प्रमाण्यं | ४५ | २१ | प्रामाण्यं |
| वद्धित | ४६ | १२ | वर्द्धित |
| काशिकयां | ४८ | १६ | काशिकायां |
| नानाथ | ४८ | १७ | नानार्थ |
| दाराधना | ४६ | ९ | दाधाना |
| प्रकरणस्याभावात् | ४६ | १३ | प्रकरणस्य सत्त्वे प्रमाणाभावात् |
| वाक्य | ४६ | | |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| तिथे | ५० | १२ | तिथेः |
| कार्यम् ? | ५२ | १५ | कार्यम् ? इति प्रश्नस्य "औदयिक्येकादश्याम्" इत्युत्तरं कथं संगच्छते ? |
| जायते | " | २० | जायेत |
| विद्वस | ५३ | १० | विद्वत्स |
| सम्मतिं | " | ११ | सम्मतिम |
| यम् | ५३ | २६ | यज्जैनैः । |
| मास्न | ५४ | ५ | मस्ति |
| आणभङ्ग | " | १८ | आणाभङ्ग |
| तिथे | ५६ | २१ | तिथेः |
| इयि | ५८ | १५ | इति |
| विश | " | १६ | विंश |
| वणितम् | " | २१ | वर्णितम् |
| पव | " | २६ | पर्व |
| तथ | ५९ | ११ | तिथि |
| तङ्गि | " | २१ | तरङ्गि |
| अव | " | ५ | अवर |
| चतुदश्या | ६० | १० | चतुर्दश्या |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| शोक्ते | ६१ | ६ | शोक्तेः |
| संग्रथित | ,, | ,, | संग्रथितः |
| गवेषणयां | ,, | १० | गवेषणायां |
| राध्याता | ,, | २६ | राध्यता |
| "इति" | ६२ | ४ | "टिप्पणानुसारेण" इति |
| चतुर्दश्याम् । | ६३ | ६ | चतुर्दश्याम्, चतुर्दश्याश्च त्रयोदश्याम् । |
| मस्यो | ,, | ७ | मास्यो |
| समाराध्यते | ६४ | ७ | समाप्यते |
| विस्पष्ट | ,, | २४ | विस्पष्टं |
| इत्यत्र | ६५ | ८ | इत्यत्र "परावृत्त्य अभिमन्यते" इति न च्छेदः किन्तु |
| चतुदश्या | ६६ | १ | चतुर्दश्या |
| घट | ,, | १८ | घटवति |
| चिकार्षुः | ६७ | १६ | चिकीर्षः |
| सव | ७० | १ | स[illegible]ः |
| तिंद्दीए | ,, | ४ | तिहीए |
| आणाञ्च | ७१ | ११ | राणाञ्च |
| पर्वतितिथी | ,, | १९ | पर्वतिथी |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|---|
| दर्थि | ,, | २० | दर्थाय |
| रूषे | ७२ | ६ | रूपे |
| द्वात्रिंश | ,, | २३ | द्वात्रिंशा |
| तस्य | ७३ | ९ | तस्य त |
| लापा | ,, | १४ | लापा |
| परमाथ | ,, | १८ | परमार्थं |
| प्रवृत्तत्वेच | ७४ | २ | प्रवृत्तावेव |
| प्रकरेण | ,, | ३ | प्रकारेण |
| दादेव | ,, | ५ | दावेव |
| शाम्ना | ७५ | २० | शास्त्रा |
| तिथि | ७६ | ११ | तिथिः |
| स्पश | ,, | २६ | स्पर्श |
| पव | ७७ | २६ | पर्व |
| लिङ्गन्तो | ८० | १० | लिङ्गन्तीं |
| वोरात्त | ८४ | ७ | वोत्तरा |
| टिप्पणनु | ,, | १२ | टिप्पणानु |
| मतस्य | ,, | २६ | भूतस्य |
| संगच्छते | ,, | ,, | संगच्छेत |
| पव | ८५ | २३ | पर्व |
| सप्तत्याः | ८६ | २२ | सप्ततीनां |

| अशुद्धम् | पृष्ठे | पंक्तौ | शुद्धम् |
| --- | --- | --- | --- |
| यत्र दिने | ८७ | १ | यत्र दिने क्षीणतया वृद्धतया वा टिप्पणे निर्दिष्टास्तत्र दिने ताः |
| तया | ८९ | ६ | ता |
| तन्न | ,, | ७ | तत्र |
| स्यादेव | ,, | १५ | कृतः स्यादेव |
| कल्याकण | ९१ | ६ | कल्याणक |
| प्रधान्याद् | ,, | ,, | प्राधान्याद् |
| प्रविनाविति पत्तिं | ९२ | २६ | विना विप्रतिपत्तिं |
| समा | ९३ | १८ | सदा |
| प्रवर्तित | ,, | ,, | प्रवर्तितव्य |

शोधने कालकार्पण्यात्तथा मुद्रणदूषणात् ।
सञ्जातास्त्रुटयोऽनेका यद्यप्यत्र विशोधिताः ॥ · ॥
तथापि कार्यबाहुल्यात्परिपूर्णानवेक्षणात् ।
सम्भाव्यमाना ये दोषास्तानुदारा हरन्तु नः ॥ २॥



( ८ )

"श्रीशासनजयपताकायां" पूर्वं कथंचित् कृतहस्ताक्षरेषु प्रमुखाणामन्येषां च विदुषां तस्याः प्रतिकूला "अर्हत्तिथिभास्कर" स्य चानुकूलाः

## सम्मतयः

१. काशीस्थराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां साहित्याचार्य, साहित्यवारिधि, साहित्यवाचस्पतिप्रभृत्यनेकोपाधिविभूषितानां श्रीकाशी-विद्वत्परिषत्सभापतीनां महामहोपाध्याय-पण्डितप्रवर-श्रीनारायणशास्त्रि-खिस्तेमहोदयानां—

## सम्मतिः

श्रीमन्महामहोपाध्याय—पं०—चिन्नस्वामिशास्त्रिमहोदयैर्जैनानां चतुर्दशीपूर्णिमादिपर्वतिथिक्षयवृद्धिविषये "शासनजयपताका"—नामको निबन्धो विलिख्य मह्यं प्रदर्शित आसीत्। तदानीं कार्यान्तरव्यग्रोऽहन्तन्निबन्धमापातत एव निरीक्ष्य शास्त्रिवराणां गौरवात्तत्र हस्ताक्षरमकरवम्। इदानीं विद्वत्समित्या सङ्कलितम् "अर्हत्तिथिभास्करं" नाम निबन्धं समीक्ष्य तत्र बहुविधप्राचीनजैनधर्मशास्त्रग्रन्थोद्धरणानि च दृष्ट्वा निष्पक्षपातया दृशा परीक्ष्य "अर्हत्तिथिभास्कर" पक्षमेव समीचीनं मन्ये। ब्रूये च पूर्वमापाततः कृतस्य स्वहस्ताक्षरस्य विषये। धार्मिकैर्जैनैः अर्हत्तिथिभास्कर" पक्ष एव नूनमवलम्बनीय इति सम्मन्ये।

काशी— ह० नारायणशास्त्री खिस्तेः

पौ० शु० ५, २००६ वै०

२. वाराणसीस्थविरलासंस्कृतमहाविद्यायाध्यक्षाणां वैयाकरणशिरोमणीनां दर्शनधर्मशास्त्रादिप्रकाण्डपण्डितानां काशीकोविदकुलालङ्काराणां श्रीमतां सुप्रसिद्धयशसामनेकोत्तमोत्तमग्रन्थकाराणां तत्र भवतां पं० सभापतिशर्मोपाध्यायानां

## सुसम्मतिः

श्रीमन्माननीयानां प्रियवराणां कतिपयजैनविद्वत्प्रदर्शिततिथिवृद्धिक्षयजैनधर्मग्रन्थादवगत्य निर्मिततद्विषयकव्यवस्थानां म० म० विद्वद्वरचिन्नस्वामिनां "शासनजयपताकायां" समासतस्तद्व्यवस्थात एव किञ्चित्पर्यालोच्य स्वाभिमतपरिपोषकत्वेन हस्ताक्षरं मया विहितमिति स्मर्यते ।

साम्प्रतं जैनाभिमतपर्वतिथीनां वृद्धिक्षयविषये मतभेदेन विस्तृतव्यवस्थाद्वयं निबन्धरूपेण विस्तरतोऽवलोक्य परीक्ष्य च पूर्वं हस्ताक्षरं जैनग्रन्थरहस्यानवबोधविजृम्भणमिति मन्यमानेन मया "अर्हत्तिथिभास्कर" नामधेया व्यवस्थैव शास्त्रतस्तदनुकूलतर्कतश्च प्रमाण्यते—

काशी ह० सभापतिशर्मोपाध्यायेन
पौष शु० ७, २०० वै०

३. सद्व्याकरणवेदान्ताद्यनेकशास्त्रप्रकाण्डपण्डितवर्याणां श्रीकाशी विद्वत्परिषदो विशेषाधिकारिणां काशीस्थश्रीगोयनकासंस्कृतमहाविद्यालयाध्यक्षाणां श्रीमतां कमलाकान्तमिश्रमहाशयानाम्

## सम्मतिः

म० म० पं श्रीचिन्नस्वामिशास्त्रिमहाशयैः स्वप्रणीतायां "शासनजयपताकायाम्" मामिका सम्मतिर्यदुक्त्वा गृहीताऽऽसीत् तत् तदीयपताका-

यान्नास्ति। यदस्ति तत्तु नैव रोचेत कोविदाय कस्मैचित्। अतस्तस्याः सम्यङ् निराकरणपूर्वकम् "अर्हत्तिथिभास्करे" काशीविद्वत्समित्या जैनपर्वतिथीनां क्षयवृद्धिविषये यस्सिद्धान्तः सुप्रतिष्ठापितस्स एव जैनशास्त्राणां प्राचीनतमजैनसामाचारीणाञ्चानुकूलतया मम मान्यः।

चतुर्दश्यादीनां विशुद्धगणितोपजीविटिप्पणोदितसमयस्याशास्त्रीयमन्यथाकरणम् प्रतिपादयन्त्यां "शासनजयपताकायाम्" असता प्रकारेण कारितस्य मामकीनहस्ताक्षरस्यानुसन्धानन्दुनोति मदीयम्मानसमिति धार्मिकैर्जैनैः "अर्हत्तिथिभास्करे" सिद्धान्तितः पक्ष एव प्रमाणतया ग्रहीतव्य इति सानुरोधं सन्दिशामि—

गो० सं० म०, ललिताघट, ह० कमलाकान्तमिश्रः

काशी

पौषी पू० २००६

४. न्यायवेदान्तादिषड्दर्शनीविद्याविद्योतितान्तःकरणानां काशीहिन्दूविश्वविद्यालये दर्शनविभागाध्यक्षाणां भामतीप्रकाशविकासव्युत्पत्तिवादप्रकाशादिसद्ग्रन्थप्रणयनप्रसृतयशोनिचयानां पण्डितप्रवरश्रीलक्ष्मीनाथझामहानुभावानां—

## समुद्घोषः

"शासनजयपताका"—कर्तुश्चिरपरिचयात् तदीयं ग्रन्थमनालोच्यैव पूर्वं तत्पक्षे सम्मतिर्मया प्रदत्ता। परमधुना प्रकृतविषयसम्बद्धान् प्रायः सर्वान् जैनग्रन्थान् विवदमानयोराचार्ययोर्वक्तव्यानि च सम्यक् परिशील्येदमिश्चीयते यत् पर्वतिथिक्षयवृद्धिविषयकं श्रीसागरानन्दसूरिमतं जैनशास्त्रविरुद्धम्। तत्समर्थनाय प्रवृत्ता "शासनजयपताका" च अयौक्तिकी अप्रामाणिकी अशास्त्रीया चेति काशीस्थविद्वत्समित्या लिखितम् "अर्ह-

त्तिथिभास्करम्" एव शास्त्रीयतया प्रामाणिकतया जैनजनोपादेयतया च सुदृढमुद्घोपयामीति ।

ह० लक्ष्मीनाथझाः

काशी

पौ० कृ० १४, २००६ वै०

५. साहित्याचार्य, साहित्यरत्नाकर, विद्यासागराद्यनेकपदवीप्रतिष्ठाकराणां श्री जो० म० गोयनका-संस्कृतमहाविद्यालयोपाध्यक्षाणां श्रीटीकमणिसंस्कृतमहाविद्यालयाध्यक्षाणां साहित्यशास्त्रप्रधानाध्यापकानां धर्मशास्त्रविद्वद्वररत्नानाम् श्रीताराचरणशर्मभट्टाचार्यमहाभागानाम् ।

## निश्चयः

"शासनजयपताका"—कर्तुर्मतं स्थालीपुलाकन्यायेन पूर्वमालोचितमपि साम्प्रतम् "अर्हत्तिथिभास्करे" प्रतिपादितस्य मतस्य सम्यक् समालोचनेन पर्वतिथिक्षयवृद्धिविपये विप्रतिपद्यमानयोरुभयोरप्याचार्ययोरुक्तीनां विशिष्य विचारेण च जैनशास्त्राणां तत्सात्त्विकप्राचीनाचारपरम्पराणाञ्च प्रतिकूलं प्रतिभात्यतः "अर्हत्तिथिभास्करे" प्रतिष्ठापितः सिद्धान्त एव जैनमतावलम्बिभिर्निःङ्कमाश्रयणीय इति निश्चिनोति—

गो० सं० म०, ललिताघाट ह० श्रीताराचरणशर्मा भट्टाचार्यः

काशी

पौ० शु० ५, २००६ वै०

६. कवितार्किकचक्रवर्तिनां साहित्यव्याकरणदर्शनादिशास्त्राचार्यधुर्याणां काशीहिन्दूविश्वविद्यालये साहित्यविभागाध्यक्षाणां विश्वविद्यालय-महासभाशिक्षासभादि ( कोर्ट, सिनेट, फेकल्टी ) सदस्यानाम् अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनमुखपत्रस्य "संस्कृतरत्नाकरस्य"

प्रधानसम्पादनकानां पं० श्री महादेवपाण्डेयमहोदयानां

## सुसम्मतिः—

श्रीविश्वनाथो विजयते—

"बुद्धेः फलमनाग्रह" इति "सत्ये नास्ति भयं क्वचिद्" इति च व्याहृतो विमृश्याभियुक्तानां पौरस्त्या मतिः पश्चिमेन प्रमाणप्रभवेण निश्चयेन प्रतिबद्धप्रसरा सम्पाद्यत इति तर्कविदां समयमादाय च "पताकां" भूयोभिरासाद्य पातकैरिव प्रमाणाभासावकरैराकीर्णां विद्वद्धोरेयैः सन्दब्धं वैकटिकतर्कनिकषनिकषितम् "अर्हत्तिथिभास्करं" नाम निभालयन् सुवर्णहारं कस्को न मोमुह्यादन्तर्वाणिगणाग्रणीः। अकामयमानोऽपि स्तुत्यं निबन्धरत्नमिदं न कण्ठे कुर्वीत यो वा लब्धवर्णो विमत्सरः ?

एषोऽपि जनोऽनूचानपथं न्याय्यमनुसर्तुं निर्बध्यमानष्टिप्पणीभणितानि यथाश्रुतग्रहण एव प्रामाणिकतामाटीकयन् वृद्धित्तयौ पर्वतिथीनां सम्प्रदायग्रन्थवीथीषु शिष्टपारम्पर्याचरितासु भृशं सम्पश्यन् सम्प्राप्ताभ्युदयह्रासलक्षणवैलक्षण्यासु तिथियुगलीषु चर्चास्पदतामवगाहमानासु यौगपद्येन कृत्यद्वयविधानसंरम्भमबाधितमाकलयन् काममादरीदरीति प्रामाण्यम् "अर्हत्तिथिभास्करस्य" इति—

काशी ह० महादेवपाण्डेयः

माघश्यामा द्वितीया

वै० २००६

७. शास्त्रार्थधुरन्धराणां व्याकरणाद्यनेकशास्त्राध्यापकवर्याणां काशीस्थश्रीरामानुजसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीमद् वैष्णवप्रवराणाम्

विद्वत्कुलालङ्काराणां पं० श्रीपूर्णचन्द्राचार्याणां

## सम्मतिः

म० म० पण्डितश्रीचिन्नस्वामिशास्त्रिभिरापातरमणीयं यत्किमप्युक्त्वा स्वनिर्मित "शासनजयपताकायाः" पक्षे पूर्वं मम हस्ताक्षराणि गृहीतानि, किन्तु साम्प्रतं पर्वतिथिक्षयवृद्धिविषयकजैनशास्त्रादिसाहाय्येनान्तः प्रविश्य पर्यालोचने कृते तु तत्पुस्तके समर्थितं मतमसिद्धान्तगर्ते निपतितं प्रमिणोमि।

विद्वत्समित्या लिखिते "अर्हत्तिथिभास्करे" च युक्तिप्रमाणजातैः प्रतिष्ठापितं सिद्धान्तमेव जीताचारजैनशास्त्रादिप्रमाणसम्मतं निश्चिन्वन् तस्यैव धार्मिकजैनसङ्घस्योपादेयतां दार्ढ्येन प्रमाणयामीति—

माघ कृ० ३, ह० पूर्णचन्द्राचार्योऽहम्
२००६ वै०

८. न्यायवेदान्तव्याकरणाद्यनेकशास्त्राचार्याणां वाराणसेयविद्वद्वर्यमाला-प्रपूरकाणां धर्मसौजन्यसजीवप्रतिमानां मिथिलामहीमहारत्नानां काशीस्थ श्रीश्यामामहाविद्यालयप्रधानाध्यापकानां

पं श्री उग्रानन्दझामहानुभावानां

## समर्थनम्

म० म० श्रीचिन्नस्वामिशास्त्रिभी रचितायाः "श्रीशासनजयपताकायाः" काशीविद्वत्समित्या युक्तिप्रमाणकदम्बैः सम्यक् खण्डनं विधाय "अर्हत्तिथिभास्करे" पर्वतिथिक्षयवृद्धिविषये सिद्धान्तो यः कृतस्स एव जैनधर्मनिबन्धानुमतः धार्मिकजैनजनताऽऽश्रयणीयश्चेति प्राक् प्रकृतविषय-सम्बद्धजैनधर्मग्रन्थानालोचनेन "पताकायाम्" आपाततः प्रदत्तसम्मतिरपि "पताका" विपरीतं मतं समीचीनमिति साम्प्रतं निश्चिन्वन् श्रीरामचन्द्र-सूरिपक्षमेव प्रकृतविषयकं समर्थयति—

ह० उग्रानन्दझाशर्मा

९. व्याकरणे, मीमांसायां, सांख्ये, योगे, वेदान्ते च परीक्षाक्रमेणाचार्यपदभाजां धर्मशास्त्रसाहित्यप्रभृतीनामपि महापण्डितानां शाब्दिकशिरोमणीनां कविरत्नानां वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यापकानां श्रीमताम् पं० श्रीभूपनारायणझामहाभागानां—

## सुसम्मतिः

अनल्पकल्पनोत्सेकेन केनचिदुद्वेलितामापाततः प्रतीतोत्तममताकां "शासनजयपताकां" स्वयमामूलचूलमनालोच्यापि तदुद्वेलयितारं विश्वस्य तदसम्यक्त्वशङ्कया कवोष्णं निःश्वस्य च तत्र स्वस्य सम्मतिमुल्लेखितुमहं लेखनीमुदतिष्ठिपम्। परमद्य तु समुदञ्चन् "अर्हत्तिथिभास्करः" साक्षाद् भगवान् भास्कर इव वाराणसेयविद्वत्समितेः पुरस्तादवतरन् सर्वतस्तन्मान्यतया श्रीविजयरामचन्द्रसूरिपक्षस्यैव न्याय्यतामुपोद्बलयतीति "बुद्धेः फलमनाग्रह" इति न्यायेन स्वपूर्वसम्मतिमनभिविशमानः सम्यगवगाह्य भास्करोद्भासितपक्ष एव स्वदृढसम्मतिमुपक्षिपामीत्यलम्।

ह० श्रीभूपनारायणझाः

१०. ज्यौतिषतीर्थ, ज्यौतिषाचार्य, ज्यौतिषमार्तण्डप्रभृत्यनेकपदवीविभ्राजितानां सुरगवीमैथिलीकवयितृपुरोगण्यानां श्रीसंन्यासिसंस्कृतमहाविद्यालयकाशीप्रधानाध्यापकानां पं० श्रीसीतारामझा महोदयानां

## समर्थनम्

म० म० पं० श्रीचिन्नस्वामिशास्त्रिसम्पादितायां "श्रीशासनजयपताकायां" पूर्वमहं हस्ताक्षराण्यकरवम्। तत्र कारणमेतदासीद् यत् तत्प्रणयनकृता तादृश एवार्थस्तत्र लिखिततया निवेदितो यः प्रमाणप्रतिकूलतान्न

बिभर्ति स्म । परमिदानीम् "अर्हत्तिथिभास्कर" नाम्नो निबन्धस्य पर्यालोचनसमये "पताकां" तां प्रत्यक्षतः पश्यन् तत्राष्टमीचतुर्दश्यादीनां ज्यौतिषशास्त्रस्य, "तत्त्वतरङ्गिणी" "कल्पसूत्रदीपिका" "श्रीसेनप्रश्नः" "श्रीहीरप्रश्नः" इत्यादिजैनशास्त्रग्रन्थजातस्य च विरुद्धं सर्वथा सम्भावनापदादपेतं टिप्पणोक्तकालान्यथाकरणं तस्यां व्यवस्थापितं प्राप्नुवन् तत्प्रणेतुर्विश्वासात् तदुक्तिमात्रेण तत्र हस्ताक्षरप्रदानाद् विषीदामि । अतः "पताका" प्रतिपादिते पक्षे जैनजनतायाः प्रामाणिकत्वभ्रान्तौ स्वहस्ताक्षराणां प्रयोजकीकरणेन प्रसक्तदोषस्य परिजिहीर्षया वाराणस्याः विद्वद्वर्यैः "अर्हत्तिथिभास्करे" महता विचारेण प्रतिष्ठापितं जैनपर्वतिथिक्षयवृद्धिविषयकं सिद्धान्तमेव जैनशास्त्रसामाचारीसम्मततया ज्यौतिषशास्त्रानुमततया च समर्थयामीति ।

ह० श्रीसीतारामझाः

११. व्याकरणशास्त्राचार्यवर्याणां विद्वत्प्रवराणां बहुविधग्रन्थनिर्माणेन प्राप्तप्रकृष्टप्रतिष्ठानां गुर्जरदेशावतंसानां महनीयमत्युत्साहशीलानां काशीस्थखेतानमहाविद्यालयाध्यक्षपदे प्रतिष्ठितानां पं० श्रीबालकृष्णशर्मपञ्चोलिमहाशयानां

## वक्तव्यम्

पूर्वं जैनमतानुसारेण पर्वीभूततिथिवृद्धिक्षयविषये जातविवादे "शासनजयपताका" नाम्नी व्यवस्था काचन मत्समक्षमागता । तत्र जैनधर्मग्रन्थाननवलोक्यैव तद्व्यवस्थाऽनुरोधेन हस्ताक्षरं व्यधायि ।

अधुना परस्परं विवदमानानां जैनाचार्याणां व्यवस्थाद्वयमवाप्य विविच्य च "अर्हत्तिथिभास्कर" इत्याख्या व्यवस्थैव प्रामाणिकीति प्रमाणयति—

अधिकाशि ह० बालकृष्णशर्मा पञ्चोली

२५-१२-४९

१२. "वाराणसीपण्डितसभा" सम्पादकानां "महामहाध्यापकः" "न्यायकेशरी" "तर्कतीर्थः" "न्यायाचार्यः" इत्याद्यनेकपदवीविभूषितानां तार्किकचक्रचूडामणीनां पूर्वं जो० म० गोयनका-संस्कृत-महाविद्यालये न्यायशास्त्रप्रधानाध्यापकानामधुना काशीहिन्दूविश्वविद्यालये दर्शन-विभागाध्यापकानाम् पं श्रीवामाचरणभट्टाचार्यमहाशयानाम्

## वक्तव्यम्

पूर्वं जैनग्रन्थाननवलोक्यैव "शासनजयपताकायां" मया हस्ताक्षरं कृतम्। इदानीमवलोकितजैनधर्मग्रन्थेन निश्चीयते मया यत् साम्प्रतिको "अर्हत्तिथिभास्कर" व्यवस्थैव सर्वथा समीचीना। धर्मान्तरसमाचारा-दप्यवगम्यते तावदियमेव व्यवस्था शास्त्रसिद्धेति प्रमाणीकरोति।

काशी ह० वामाचरणभट्टाचार्यः

मा० कृ० ४, २००६ वै०

१३. काशीस्थराजकीयसंस्कृतमहाविद्यालये (गवर्नमेन्ट संस्कृत कालेज, काशी) प्रधानाध्यापकानां नव्यन्यायशास्त्रारण्यमहाकेसरिणां न्यायशास्त्रो-च्चग्रन्थानामद्वितीयव्याख्याकाराणां न्यायाचार्यपण्डितवर्यश्रीशिवदत्तमिश्र-महोदयानां—

## सम्मतिः

म० म० प० श्रीचिन्नस्वामिशास्त्रिभिर्विरचिता "श्रीशासनजय-पताका" अमूलचूलमालोक्यमाना निजानादरमेव संगृह्णाति। यतो ह्यनया ज्यौतिषशास्त्रस्यासाधारणे तिथिप्रवेशादिकालरूपे विषये धर्मशास्त्रस्यानु-चितः प्रवेशः समर्थितः "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इत्याचार्योमास्वातिवचनस्य च "तत्त्वतरङ्गिणी", कल्पसूत्रदीपिका" प्रभृति

जैनशास्त्रग्रन्थविरुद्धमप्रामाणिकमयौक्तिकं च व्याख्यानं कृतम् । अतस्तस्याः अकाट्यं खण्डनं कृत्वा "अर्हत्तिथिभास्कर" नाम्ना निबन्धेन यः सिद्धान्तः प्रतिष्ठापितः स एव शास्त्रीयतया प्राचीनतरजैनसामाचारी-सम्मततया च धार्मिकेण जैनसंघेन समादरणीय इत्यनुमन्यते—

ह० शिवदत्तमिश्रः

१४. साहित्यव्याकरणयोर्वेदान्तादिषड्दर्शनशास्त्रेषु चोत्कटपाण्डित्य-शालिनां "गवर्नमेंट संस्कृत कालेज, काशी" इतिनाम्ना प्रसिद्धे महाविद्यालयेऽध्यापकानां पं० श्रीरघुनाथशर्ममहानुभावानां—

## सम्मतिः

तिथीनां प्रवेशादिकालप्रतिपादनं ज्यौतिषशास्त्रोपजीविनः पञ्चाङ्गस्यैव कार्यं न तु धर्मशास्त्रस्य । एकशास्त्रस्यासाधारणे विषये च ततो विपरीतं बाधमाधातुं शास्त्रान्तरं न क्षमतेऽतत्परत्वात् । अतः "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इति धर्मशास्त्रीयं वचनं क्षीणवृद्धपर्वतिथीनामा-राधनादिनमात्रमवबोधयति न तु तासां पञ्चाङ्गप्रोक्तं कालं परिवर्तयतीति तद्बलेन तिथिकालपरिवर्तनसमर्थकं मतमनादरणीयमिति संमन्यते—

ह० रघुनाथशर्मा

१५. पूर्वोत्तरमीमांसाशास्त्राचार्याणां साहित्यधर्मशास्त्रादिप्रशस्त-पण्डितप्रवराणां व्याख्यानभास्कराणां मीमांसकमूर्धन्यानां दक्षिण-भारतस्य सभ्यभव्यसुधीश्रेणिशिरोमणीनां काशीहिन्दूविश्वविद्यालये

मीमांसाशास्त्राध्यापकानां पं० श्रीसुब्रह्मण्यशास्त्रिमहाभागानां

## वक्तव्यम्

"वादे वादे जायते तत्त्वबोध" इति न्यायेन यदा यस्य विषयस्य सावधानेन मनसा पर्यालोचनं क्रियते तदा विषयसंशुद्धिराविर्भवतितराम् ।

जैनमतानुसारिणां पर्वतिथिनिर्णयमधिकृत्य समनुसन्धानं कुर्वता साम्प्रतं निरधारि विषयोऽयं यत् पञ्चाङ्गस्य यथावत् प्रामाण्यमङ्गीकृत्यैव त्राणानां वृद्धानां च पर्वतिथीनामाराधनादिनस्य व्यवस्थापकत्वं "क्षये पूर्वा" इत्याद्युमास्वातिप्रघोषस्य जैनशास्त्रेषु प्रत्यपादि । अयमेव शास्त्रसम्मतः पन्थाश्शिष्टसमादृतश्चेति ।

एतेन त्रिचतुरेभ्यो वर्षेभ्यः प्राक् सम्मतिग्रहणाय प्रेषितायां "शासन-जयपताकायां" सम्यग् विषयविवेचनमन्तरा स्थालीपुलाकन्यायेन द्वित्राणि स्थलानि विलोक्य समग्रोऽपि प्रबन्धः शास्त्रानुसारी स्यादिति सम्भावनया स्वीयां सम्मतिं व्यतरम् । इदानीमुत्पन्नेन विषयपरिशोधनेन तस्या अशास्त्रीयतां निरूपयन् तत्रत्यां भ्रान्तिमपाकुर्वन्नात्मानमनृणं करोमि, समर्थयामि च "अर्हत्तिथिभास्करे" प्रतिष्ठापितं सिद्धान्त-मित्थम्—

श्रीकाशी

ह० सुब्रह्मण्यशास्त्री

वि० सं० मा० कृ० ४, २००६

१६. सर्वतन्त्रस्वतन्त्राणां विद्वदनुकरणीयचरित्राणां प्राणाधिकधर्माणां काशीस्थसाङ्गवेदविद्यालयप्रधानाध्यक्षाणाम् अखिलभारतवर्षीय वर्णाश्रम-स्वराज्यसङ्घसंरक्षकाणां वाराणसीबुधालंकाराणां—

पण्डितराजश्रीराजेश्वरशास्त्रिद्राविड़

महाभागानां

## सम्मतिः—

तिथीनां प्रवेशादि-कालविषये प्राचीनप्रामाणिकज्यौतिषग्रन्थानुसारेण प्रणीतस्य विशुद्धपञ्चाङ्गस्य प्रामाण्यन्निरपवादमिति कस्या अपि तिथेस्तदुदितकालस्यान्यथाकरणं स्तोकमपि सम्भावनापदादपेतम्। "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इति वचनं च क्षीणानां वृद्धानां च पर्वतिथीनां धर्मकार्येषु ग्राह्यताकथन्तां शमयति न तु तासां पञ्चाङ्गनिर्दिष्टं प्रवेशादिकालम् परिवर्तयतीति शास्त्रसिद्धान्त इति सम्मन्यते—

काशी-रामनगरे ह० राजेश्वरशास्त्रीद्राविड़ः

मा० कृ० ४ रवौ २००६

१७. न्यायव्याकरणसाहित्याचार्यव्याकरणभूषणादिपदवीभाजां रामनिरञ्जनदाससुरारकासंस्कृतमहाविद्यालयाध्यक्षाणां स्व० महामहोपाध्याय-पण्डितेन्द्र—पूज्यश्रीहरिहरकृपालुद्विवेदितनुजन्मनां विद्वद्वरश्रीब्रह्मदत्त-द्विवेदिमहाभावानां—

## समर्थनम्

"प्रामाणिकं पञ्चाङ्गं सर्वतिथीनां प्रवेशादिकालविषये विनाऽपवादं प्रमाणम्। "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इत्याचार्योमा-स्वातिवचश्च क्षीणानां वृद्धानाञ्च पर्वतिथीनामाराधनादिवसन्निश्चाययति

न तु तासां पञ्चाङ्गप्रोक्तं कालं परिवर्तयति ।" इति काशीस्थविदुषां मतं समर्थयति प्रकाशितम् "अर्हत्तिथिभास्कर" नाम्ना निबन्धेन ।

ह० ब्रह्मदत्तद्विवेदी

पटना, बिहार ।

२३-१-५०

१८.

( क ) बोर्ड आफ संस्कृत स्टडीज़ ( यू० पी० गवर्नमेण्ट ) गवर्नमेण्ट-संस्कृतकालेजपरीक्षापाठ्यक्रमसमिति ।

( ख ) युक्तप्रान्तनागरीलिपिसुधारसमिति ( यू० पी० गवर्नमेण्ट ),

( ग ) संस्कृतपाठशालानिरीक्षणसमिति ( पैनल आफ इन्सपैक्टर्स, यू० पी० गवर्नमेण्ट ) ।

इत्येवमादिसुप्रतिष्ठितानेकसमितिसदस्यानां कानपुर-नगरस्थ-श्रीबलदेव सहायसंस्कृतमहाविद्यालये प्रिंसिपलपदे विराजमानानां व्याकरण, साहित्याचार्य, काव्यतीर्थादिपदालङ्कृतानां पण्डितप्रवर-श्रीचन्द्रशेखरशास्त्रिणां

## सम्मतिः

"शास्त्रप्रमाणकपञ्चाङ्गनिर्दिष्टः कस्या अपि तिथेः प्रामाणिकः प्रवेशादिकालः कथमपि परिवर्तनं नार्हतीति काशीस्थसंख्यावत्सम्मतः सिद्धान्तः सर्वात्मना समीचीनः" इति मनुते—

११-१-५० ह० चन्द्रशेखरशास्त्री

१९. साहित्यव्याकरणयोः शास्त्राचार्यपदभाजामनेकच्छात्राचार्याणां मुम्बईस्थभारतीविद्याभवने साहित्यव्याकरणविभागप्रधानाचार्याणां पण्डितप्रवरश्रीशिवनाथशर्मोपाध्यायानां

## सम्मतिः—

वाराणस्याः मान्यमनीषिभिः सम्पादितः "अर्हत्तिथिभास्कर" नामा निबन्धो मया सावधानतया सम्यङ् निरीक्षितः। अत्र श्रीसागरानन्दसूरिमतपोषणे प्रवृत्तायाः "शासनजयपताकायाः" विद्वन्मनोहरेण मार्गेण तादृशं खण्डनं कृतमस्ति यस्योत्तरणं सम्भावनाबहिर्भूतम्। क्षीणवृद्धजैनपर्वतिथ्याराधनविषये चानेकानि जैनशास्त्रोद्धरणानि सुविस्तृतानि वितीर्य "क्षये पूर्वा तिथिः कार्या" इत्यादिकमाचार्योमास्वातिपद्यं पञ्चाङ्गप्रामाण्यपरिरक्षणप्रवीणेन येन पथा व्याख्यातं स नितरान्निष्कण्टकः कोविदवर्गप्रशंसासमाकर्षकश्चेति "अर्हत्तिथिभास्करे"समर्थितं श्रीरामचन्द्रसूरिमतं धर्म्यतया मयाऽनुमोद्यतेतरामिति—

ह० शिवनाथोपाध्यायः

२५-६-५०

२०. शान्तिनिकेतने भूतपूर्वसंस्कृताध्यापकानां "मानवभारती" इति नाम्न्याः सुप्रसिद्धाया अन्तरराष्ट्रियसांस्कृतिकशिक्षणसंस्थायाः प्रतिष्ठापकानां साहित्याचार्य-पण्डित-श्रीदुर्गाप्रसादपाण्डेय—पी.एच. डी., डी. लिट् महोदयानां—

## सम्मतिः—

तिथ्यादीनां प्रवेशादिकालप्रतिपादनं प्रामाणिकपञ्चाङ्गमात्राधिकारिकम्। तत्र धर्मशास्त्रस्य हस्तक्षेपो नितरामनुचितः। यतो हि यो यस्य शास्त्रस्या-

साधारणो विषयस्तत्र शास्त्रान्तरं प्रवर्तितुं नोत्सहत इति सर्वतन्त्रसिद्धान्तः। अतः "क्षये पूर्वा तिथिः कार्या" इत्याचार्योमास्वातिप्रघोषस्यार्हतधर्मशास्त्रात्मनः पञ्चाङ्गप्रोक्ततिथिकालान्यथाकारिणी कस्यापि व्याख्या शास्त्रतत्त्वज्ञानां सम्मानभाजनीभवितुन्नार्हतीति मन्निश्चयानुरूपं वाराणसीविद्वन्मतं सानन्दं समर्थयामीति—

मानवभारत्ती-मसूरी ह० दुर्गाप्रसादपाण्डेयः

५-१-५०

२१. अयोध्यास्थ राजगोपाल-संस्कृत-पाठशालाप्रधानाध्यापकानां न्यायव्याकरणाचार्याणां संयुक्तप्रान्तीयसंस्कृताध्यापकसङ्घसभापतीनां पण्डितराज-श्रीरुद्रप्रसादावस्थिमहाभागानां समुद्घोषः—

काशीविद्वत्तल्लजैर्यदिदुमुच्यते यत् "तत्तत्सम्प्रदाये तिथ्यादिनिर्णयाय प्रमाणतयाऽभ्युपगतेन पञ्चाङ्गेन यस्यास्तिथेर्यः प्रवेशादिकालो निर्दिश्यते स न केनापि कथमपि परिवर्तयितुं शक्य" इति। तदेव शास्त्रसिद्धान्ततया समुद्घोषयति—

८-१-५० ह० रुद्रप्रसादः अवस्थी

२२, "गवर्नमेण्ट इ० कालेज़, फैज़ाबाद" इत्येतस्मिन् शिक्षालये संस्कृतविभागस्य प्रधानाध्यापकानां व्याकरणाचार्य-श्रीनृसिंहनाथत्रिपाठि महोदयानां समुद्घोषः—

"सर्वतिथीनां प्रवेशादिकालविषये विशुद्धं पञ्चाङ्गमेव प्रमाणम्। तदुदितः कस्या अपि तिथेः कालो न किञ्चिदप्यन्यथाकर्तुं शक्यः। अतः क्षीणायाः पर्वतिथेः सूर्योदयकाले सम्बन्धकल्पनं वृद्धायाश्च पर्वतिथेः पूर्वदिनसम्बन्धलोपपर्यवसायिनो द्वितीयदिने नियमनस्य कल्पनमित्युभयमेव शास्त्रतत्त्वानवबोधविजृम्भणमिति "अर्हत्तिथिभास्करे" काशीस्थविद्वद्भिः प्रकाशितं मतं प्रामाणिकत्वेनोद्घोषयति।

७-१-५० ह० नृसिंहनाथत्रिपाठी

२३. एम० ए०, (संस्कृत-हिन्दी-दर्शन) एल. एल. बी. साहित्याचार्य-विद्याभूषणप्रभृत्यनेकोपाधिविभूषितानां "कालविन ताल्लुकेदार कालेज़, लखनऊ" इति विद्यालये प्रधानसंस्कृताध्यापकानां पं० श्रीराजमङ्गलनाथ-त्रिपाठिमहाशयानाम्—

## अनुमतिः

"तिथीनां प्रवेशादौ विशुद्धं पञ्चाङ्गं विनाऽपवादेन प्रमाणमिति कस्या अपि तिथेस्तदुदितः समयो नेषन्मात्रमपि पुरः पश्चाद्वा नेतुं शक्यः" इत्येत-दाधारेण 'अर्हत्तिथिभास्करे" वाराणसेयपण्डितैः प्रतिष्ठापितमाचार्य-श्रीरामचन्द्रसूरिमतं शास्त्रसिद्धान्ततया समनुमन्यते—

८—१—५० ह० राजमङ्गलनाथ त्रिपाठी

२४. "गवर्नमेण्ट इ० कालेज, झाँसी" इत्येतन्महाविद्यालये संस्कृत-विभागाध्यक्षाणां काव्यतीर्थ–साहित्याचार्य-पण्डितप्रवर–श्रीरघुवरप्रसाद शुक्ल महोदयानाम्—

## अनुमतिः

"क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इत्याचार्योमास्वाति-पद्यार्धेन क्षीणानां वृद्धानाञ्च पर्वतिथीनामाराधनादिवसमात्रं निर्णीयते न तु तासां पञ्चाङ्गप्रोक्तः प्रवेशादिसमयः प्रतिपिध्यते" इति मतं प्रकाशितम् "अर्हत्तिथिभास्कर" इत्येतत्प्रबन्धे पण्डितैर्वाराणस्यास्सप्रमोदं प्रामा-णिकत्वेनानुमन्ये ।

ह० रघुवरप्रसादशुक्लः

२५. गोरखपुरनगरे बालमुकुन्दमहाविद्यालये संस्कृतविभागप्रधाना-ध्यापकानां साहित्यव्याकरणाचार्याणां श्रीमताम्—

मनोपिवर्याणाम् अवधेशनाथमिश्रमहाशयानां समर्थनम्—

"क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा" इति वचनं पर्वतिथीनां क्षयवृद्धी समनुमन्यमानं तासामाराधनादिवसं प्रदर्शयति, न तु तासां पञ्चाङ्गप्रोक्तं समयं पश्चात् पुरस्ताद्वा नयति" इति वाराणसेयविद्वज्जनैः "अर्हत्तिथिभास्करे" प्रतिपादितं शास्त्रीयमर्थं समर्थंति—

माघ कृष्ण ५, सं० २००५ ह० अवधेशनाथमिश्रः

२६. "गवर्नमेण्ट ट्रेनिङ्ग कालेज, गोरखपुर" इति विद्यालये संस्कृतविभागाध्यापकानां व्याकरणाचार्यपण्डितश्रीरमापतिचतुर्वेदिमहाशयानां—

## सम्मतिः

"क्षये पूर्वा" इत्यादिकं आचार्योमास्वातिप्रघोषः क्षीणानां वृद्धानाञ्च जैनपर्वतिथीनामाराधनादिनमात्रं प्रमापयति न तु तासां पञ्चाङ्गसूचितं स्वाभाविकं समयमन्यथाकर्तुं पारयति" इति "अर्हत्तिथिभास्करे" प्रतिष्ठापितं श्रीरामचन्द्रसूरिपक्षं शास्त्रयुक्तिसम्मतं सम्मन्यते—

८-१-५० ह० रमापतिचतुर्वेदी

२७. लखनऊ धर्मसङ्घसंस्कृतमहाविद्यालये प्रधानाध्यापकानां साहित्यभूषणव्याकरणाचार्यादिपदभाजां पण्डितश्रीरामचरित्रपाण्डेय-महानुभावानां

## सम्मतिः

श्रीजैनसङ्घे श्रीमदुमास्वातिप्रघोषतया प्रसिद्धं "क्षये पूर्वा तिथिः कार्या" इत्यादिकं पद्यं क्षीणवृद्धपर्वतिथीनामाराधनावासरं विनिश्चाययति न तु तासां प्रवेशादिकालं प्रकृत्य किञ्चित्प्रतिपादयति" इति काशीकोविदकीर्तितं शास्त्रसत्तर्कसंवलितं मतं समर्थयति—

९-१-५० ह० रामचरित्रपाण्डेयः

२८. "रणधीर-कालेज़, कपूरथला, पञ्जाब" इति शिक्षणालये संस्कृतविभागप्रधानाध्यक्षाणाम् अनेकसद्ग्रन्थरचनया पण्डितमण्डलीषु प्रतिष्ठापितप्रभावाणां व्याकरणाचार्याणां विद्वद्वरश्रीश्रीधरानन्दशास्त्रि-घिल्डियालमहाशयानाम् अनुमतिः—

"जैनसम्प्रदाये श्रीमदाचार्योमास्वातिप्रघोषतया प्रसिद्धिमध्यासीनं "क्षये पूर्वा तिथिः" इत्यादि पद्यार्धं क्षीणानां वृद्धानाञ्च पर्वतिथीनामारा-धनादिनमात्रमावेदयति न तु तासान्निसर्गसङ्गतं पञ्चाङ्गविनिवेदितं प्रवेशा दिकालमन्यथयति" मतमेतद् वाराणसेयविदुषाम् "अर्हत्तिथिभास्करतः" प्रपश्यन् परमां प्रीतिमुपयन् तस्य प्रामाणिकतां समुपोद्बलयति—

७–१–५०　　　　　　　　ह० श्रीधरानन्दघिल्डियालः

२९. गोण्डामण्डलावयवबलरामपुरराज्यस्य प्रधानपण्डितानां तदीय-विद्यालये संस्कृतविभागप्रधानाध्यापकानाम् अनन्यकवीनां साहित्यव्याकरण-न्यायाचार्यप्रभृत्यनेकोपाधिभिर्मण्डितानां श्रीरामप्रकटमणित्रिपाठिमहो-दयानाम्—

## समर्थनम्

"विशुद्धगणितोपजीविना पञ्चाङ्गेन प्रोच्यमानस्तत्तत्तिथिसमयो न केनापि साधनेनान्यथयितुं शक्य इति सूर्योदयकालेऽप्रवृत्तायाः कस्या अपि तिथेस्तत्र प्रवृत्तिमाननं दिनद्वये सूर्योदयं स्पृशन्त्याश्च पूर्वदिने लोपकरण-मित्युभयमपि प्रमाणशून्यम्, अशास्त्रीयं सम्भावनातीतञ्चेति" काशीकोविदैः "अर्हत्तिथिभास्करे" प्रतिपादितं मतं समर्थयति—

ह० श्रीरामप्रकटमणित्रिपाठी

३०. श्रीसोमेश्वरनाथसंस्कृतमहाविद्यालय, अरेराज़, चम्पारन, विहार-प्रान्त" इति शिक्षणालये प्रिंसिपलपदशोभाकृतां महाविपश्चितां न्यायव्याकरणाचार्य-श्रीसुधाकरत्रिपाठिमहाशयानामनुमतिः—

असदर्थगर्भां शासनजयपताकाम् भृशं खण्डयित्वा अर्हत्तिथि-भास्करे काशोविद्वत्समित्या जैनपर्वतिथिक्षयवृद्धिविषये व्यवस्थापितं सिद्धान्तं सुदृढमनुमन्यते ।

पौ० कृ० ७, वै० २००६ ह० सुधाकरत्रिपाठी

३१. प्रयागस्थश्रीधर्मोपदेशसंस्कृतपाठशालाप्रधानाध्यापकानां संयुक्त-प्रान्तीय-संस्कृताध्यापकसङ्घस्यार्थमन्त्रिणां व्याकरणाद्यनेकशास्त्राचार्यपदा-लङ्कृतानां पण्डितप्रकाण्डश्रीभूपेन्द्रपतित्रिपाठिमहाशयानां सम्मतिः—

"सर्वतिथीनां प्रवेशादिसमयविषये विशुद्धं गणितोपजीव्यकं टिप्पणमेव निरपवादं प्रमाणमिति चतुर्दश्यादिजैनपर्वतिथीनां टिप्पणोक्तकालस्य तासां क्षयवृद्धिप्रसङ्गे मनागप्यन्यथाकरणं सर्वथाऽशास्त्रीयं प्रामाणिकग्रन्थोपलभ्य-मानप्राचीनजैनसामाचारीविरुद्धञ्च" इति काशीस्थविद्वत्प्रतिपादितं मतं सुदृढं समर्थयति—

दिनाङ्क ६ जनवरी १९५० ह० भूपेन्द्रपतित्रिपाठी

३२. मुम्बईप्रान्तान्तर्गतधारवारमण्डलावयवगदगनगरस्थश्रीजगद्-गुरुशिवानन्दसंस्कृतमहाविद्यालयप्रधानाध्यक्षाणां वेदान्तसांख्ययोगशास्त्रा-चार्याणां, वे०, सां, काव्यतीर्थानां न्यायमीमांसाशास्त्रिणां दर्शनरत्नाकराणां विद्वद्वरश्रीमन्महेश्वरशास्त्रिमहाभागानां सम्मतिः—

"अतिपरिशीलितगणितोपजीविना पञ्चाङ्गेन कथ्यमानस्तत्तत्तिथिसमयो न केनापि साधनेन परिवर्तयितुं शक्योऽतः सूर्योदयस्पर्शशून्यायाः पर्वतिथेर-र्कोदयकाले विद्यमानताया दिनद्वये दिवाकरोदयं स्पृशन्त्याश्च तस्याः पूर्व-

स्मिन्नहनि लोपफलायाः द्वितीयदिनसत्तायाश्च स्वीकरणं प्रमाणापाटवम-वद्योतयति" इति मे मतम् ।

ह० महेश्वरशास्त्री

३३. 'विश्वकविश्रीरवीन्द्रनाथटैगोरमहाशयानां मूर्तभावनाभूते वङ्गप्रान्तान्तर्वर्तिनि **शान्तिनिकेतने** राष्ट्रभाषाप्रधानाध्यापकानां ज्यौतिषसाहित्याचार्याणां हिन्दीजगतः सर्वश्रेष्ठपण्डितानां **विश्वभारती** प्रधानसम्पादकानाम् **आचार्यश्रीहजारीप्रसादद्विवेदि डी० लिट्०** महोदयानां सम्मतिः—

"विशुद्धगणिताधारेण प्रणीतं पञ्चाङ्गमेव तिथिनक्षत्रादीनां मानमुपवर्ण-यितुं प्रभवति, अतस्तदनुसारेणैव व्रतोपवासप्रभृतीनि धार्मिककृत्यानि कर्तव्यानि ।

निर्दोषगणिताश्रितपञ्चाङ्गानुसारेणैव परिणयादिलक्षणानि माङ्गलिक-कार्याण्यप्यनुष्ठेयानि । प्रामाणिकपञ्चाङ्गनिर्दिष्टः तिथ्यादिप्रवेशादिकालश्चापरेण केनापि शास्त्रेण विपरिवर्तयितुं न शक्य" इति काशीपण्डितमण्डलीमतं मुदाऽभिनन्दन्नात्मनीनं निश्चयमिमं दार्ढ्येनोद्घोषयामि यद् धार्मिक सामाजिकविधेयजातेषु विशुद्धपञ्चाङ्गीयो यथाश्रुतस्तिथ्यादिनिर्देश एव समादरास्पदमिति ।

शान्तिनिकेतन ह० **हजारीप्रसादद्विवेदी**

३४. **जयपुरस्थमहाराजसंस्कृतमहाविद्यालये** व्याकरणप्रधानाचार्याणां न्यायवेदान्तव्याकरणाचार्याणां दर्शनालङ्काराणां रसगङ्गाधरसदृशानां महा-ग्रन्थानामनन्यासाध्यव्याख्याविरचनयाऽसाधारणीं विख्यातिमासादितवतां

विद्वद्वर पं० श्रीकेदारनाथौझाशर्मणां

## सम्मतिः

"आचार्योमास्वातिवाचकमुख्यप्रघोषत्वेन सुविश्रुतं "क्षये पूर्वा तिथिः कार्या" इत्यदिकं वचो जैनपर्वतिथीनां क्षयवृद्धयोः प्रसक्तौ तासामाराधनादिनं पञ्चाङ्गस्य यथाश्रुतार्थे प्रामाण्यमहत्वैव प्रतिपादयति। अतः सूर्योदयकाले असत्या अष्टम्यादेस्तदानीं सत्ताकल्पनं द्विसूर्योदयसंसृष्टायाश्च तस्या दिनान्तरमात्रे सङ्कोचनं तत्पूर्वतिथेश्च क्षयवृद्धिस्वीकरणं सर्वमिदं मोहस्यचेष्टितम्" इत्येतदर्थं वाराणसीविद्वत्प्रतिष्ठापितं समनुमन्यते सविमर्शप्रहर्षम्।

ह० केदारनाथ ओझाः

३५. "मुंशीसिंह-डिग्री-कालेज, मोतीहारी, विहार-प्रान्त" इत्येतन्महाविद्यालये प्रोफेसरपदभाजां वेदान्तसाहित्यशास्त्रिणां न्यायव्याकरणशास्त्राचार्याणां पण्डितप्रवरश्रीगिरिजादत्तत्रिपाठि एम० ए० ( संस्कृत-हिन्दी ) महोदयानां

## सम्मतिः

"श्रीमदुमास्वातिप्रघोषरूपस्य "क्षये पूर्वा" इत्यादिवचनस्य क्षीणवृद्धजैनपर्वतिथीनामाराधनावासरविनिश्चय उपयोगो न तु पञ्चाङ्गविरुद्धस्य तासां प्रवेशादिकालस्य परिबोधने। अतोऽष्टमीचतुर्दश्यादीनां क्षयवृद्धिस्थले एतद्वचनमाश्रित्य श्रीसागरानन्दसूरिभिः क्रियमाणा कुकल्पना शास्त्रविरुद्धतया तर्कप्रतिकूलतया च धर्महानिकरत्वात् परित्याज्या" इत्येव मे सुनिश्चितं मतम्। एतत्संवादादेव "अर्हत्तिथिभास्करे" काशीपण्डितैः प्रकटीकृतं मतमनुमोदयामि।

१०-१-५०

ह० गिरिजादत्तत्रिपाठी

२६. भारतराष्ट्रपितामह स्व० प० श्रीमदनमोहनमालवीयमहोदयानां पुण्यस्मृतौ प्रतिष्ठापिते हरिद्वारस्थे जयभारतसाधुमहाविद्यालये न्यायव्याकरणप्रधानाध्यापकानां न्याय, व्याकरण, वेदान्त, साहित्याचार्याणां पण्डितश्रीमहानन्दठाकुरमहाशयानां

## सम्मतिः

"श्रीजैनसङ्घे श्रीमदुमास्वातिप्रघोषतया प्रसिद्धं "क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरा। श्रीवीरज्ञाननिर्वाणं कार्यं लोकानुगैरिह" इति पद्यं क्षीणवृद्धपर्वतिथीनामाराधनादिनव्यवस्थापकत्वेन प्राचीनप्रामाणिकजैनग्रन्थेषु तथोपवर्णितमास्ते यथा पञ्चाङ्गे निर्दिष्टस्य तिथिप्रवेशादिकालस्य विपर्यासो न प्रसज्ज्यते"। अतः काशीपण्डितैरुक्तवचसो योऽभिप्रायः प्रमाणितस्तमेवाहमनुमन्ये।

हरिद्वार १२–१–५०    ह० महानन्दठाकुरः

२७. हरद्वारस्थजयभारतसाधुमहाविद्यालये मुख्याध्यापकानां न्याय, व्याकरण, वेदान्ताचार्य काव्यतीर्थेत्याद्युपाधिशालिनां श्रीमतां विद्वद्वर— प० त्रिलोकधरद्विवेदिनां

## सम्मतिः

"श्रीजैनसम्प्रदाये "क्षये पूर्वा तिथिः कार्या" इत्यादेराचार्योमास्वातिप्रघोषस्य पञ्चाङ्गप्रामाण्यासङ्कोचेनैव क्षीणवृद्धपर्वतिथीनामाराधनादिवसव्यवस्थापकत्वं पुरा मन्यते स्म" इति प्राचीनानेकजैनशास्त्रग्रन्थसाक्षिको योऽर्थः वाराणसेयैर्बुधवर्यैः प्रत्यपादि "अर्हत्तिथिभास्करे" तमेव सप्रमोदमनुमन्यते—

ह० त्रिलोकधरद्विवेदी

३८. "श्रीसारवारसंस्कृतपाठशाला, सलेमपुर, देवरिया" इति विद्यालये प्रधानाध्यापकानां व्याकरणशास्त्राचार्याणां सुप्रसिद्धाभिधानां पण्डितश्रीदेवशरणमिश्रमहाशयानां

## सम्मतिः

"श्रीजैनसङ्घे श्रीमदुमास्वातिरचिततया सुविख्यातं "क्षये पूर्वा तिथिः कार्या" इत्यादिवचनं पञ्चाङ्गस्य प्रामाण्यं मनागप्यसङ्कोचयदेव क्षीणवृद्ध-पर्वतिथीनामाराधनादिनव्यवस्थापयितृतया जैनानिन्द्यनिबन्धेषु निरूपित-त्विभाल्यते" इत्यतः प्रस्तुतं मतं काशीविदुषां सहर्षं सम्मन्यते—

७-१-५०                                                                 ह० देवशरणमिश्रः

३९. राजस्थानान्तर्गतयोधपुरराज्यरक्षिते "दरबारमहाविद्यालये" मुख्यसंस्कृताध्यापकानां व्याकरणाचार्य, काव्यतीर्थ, साहित्यरत्नेत्युपाधित्रय-विभूपितानां पण्डितवरश्रीसत्यनारायणमिश्रमहाशयानां

## सम्मतिः

विशुद्धस्य तत्तत्सम्प्रदाये प्रमाणतयाऽभ्युपगतस्य पञ्चाङ्गस्याशेषतिथीनां प्रवेशादिकालगोचरं प्रामाण्यमसङ्कुचितमञ्चति । "क्षये पूर्वा तिथिः कार्या, वृद्धौ कार्या तथोत्तरा" वचनञ्चेदमाचार्यवर्योमास्वातेः क्षीणानां वृद्धानाञ्च पर्वतिथीनां दिवसमात्रमाराधनाया अभिधत्ते न तु विपरीतीकुरुते कालं तासां प्रवेशादेष्टिप्पणभणितमिति शास्त्रयुक्तिप्रमाणकं काशीस्थकोविदवृन्दमतमादरी-दरीति ।

११—२—५०                                                                 ह० सत्यनारायणमिश्रः

४०. लक्ष्मणपुर ( लखनऊ ) नगरे प्रान्तीयसचिवालयोपजीविपाठ्य-पुस्तकनिर्धारणपरिषदः सदस्यानां संस्कृतहिन्दीभाषयोर्महाध्यापकानाम्

